यू.जी.सी. संरक्षणसूचीबद्धा ( UGC Care-Listed )
ISSN : 2349-6452




# शिक्षामृतम्

## शिक्षाविभागीयवार्षिकी शोधपत्रिका

अङ्कः-13



केन्द्रीयसंस्कृतविश्वविद्यालयः
( संसदः अधिनियमेन स्थापितः )
श्रीरणवीरपरिसरः, कोट-भलवालः, जम्मूः - 181122 ( जम्मूकाश्मीरः )
ई मेल : director-jammu@csu.co.in वेबसाईट : www.csu-jammu.edu.in
2022

ISSN : 2349-6452

# शिक्षामृतम्

( शिक्षाविभागीयवार्षिकी शोधपत्रिका )

[ अङ्कः - 13 ]

संरक्षकः
**प्रो. श्रीनिवासवरखेडी**
कुलपतिः

प्रधानसम्पादकः
**प्रो. मदनमोहनझाः**
निदेशकः

सम्पादकौ
**प्रो. कुलदीपशर्मा ● डॉ. मदनकुमारझाः**



**केन्द्रीयसंस्कृतविश्वविद्यालयः**
( संसदः अधिनियमेन स्थापितः )
श्रीरणवीरपरिसरः, कोट-भलवालः, जम्मूः - 181122
**2022**

प्रकाशकः
निदेशकः
**केन्द्रीयसंस्कृतविश्वविद्यालयः**
(भारतसर्वकारस्य शिक्षामन्त्रालयाधीनः)
श्रीरणवीरपरिसरः, कोट-भलवालः, जम्मूः-181122 (जम्मू-कश्मीरः)
दूरभाषः 0191-2623090
ई मेल : director-jammu@csu.co.in
वेबसाईट : www.csu-jammu.edu.in

---

**समीक्षासमितिः**
**प्रो. प्रह्लाद आर्. जोशी**
(कुलपतिः, भास्करवर्मसंस्कृत-पुरातनाध्ययनविश्वविद्यालयः, आसमः)
**प्रो. आर्.पी. पाठकः** (आचार्यः शिक्षाशास्त्रविभागः, रा.सं.वि. नवदेहली)
**प्रो. प्रभादेवीचौधरी** (पूर्वविभागाध्यक्षा, शिक्षाशास्त्रविभागः, भोपालपरिसरः)
**प्रो. के. भरतभूषणः** (आचार्यः शिक्षाशास्त्रविभागः, रा.सं.वि. नवदेहली)
**श्रीशरतचन्द्रशर्मा** (सङ्घायाध्यक्षः, आधुनिकविभागः, के.सं.वि.वि. नवदेहली)

**परामर्शदात्रीसमितिः**
**प्रो. पी.एन्. शास्त्री** (कुलपतिचरः, के.सं.वि.वि. देहली)
**प्रो. गोपीनाथशर्मा** (विभागाध्यक्षचरः, ज.रा.रा.सं.वि.वि., जयपुरम्)
**प्रो. नगेन्द्रझाः** (शिक्षासंकायचरः, ला.ब.रा.सं.वि.वि. देहली)
**प्रो. राधागोविन्दत्रिपाठी** (परीक्षानियंत्रकचरः, रा.सं.वि.वि. तिरुपतिः)
**प्रो. पवनकुमारः** (परीक्षानियंत्रकः, के.सं.वि.वि. देहली)

**सहसम्पादकाः**
- **डॉ. देवेन्द्रकुमरमिश्र**
- **डॉ. शुभश्रीदाशः**
- **डॉ. मदनसिंहः**
- **डॉ. प्रमोदकुमारशुक्लः**
- **डॉ. हरिओम**

---



प्रथमसंस्करणम् : 500 (पञ्चशतम्)

ISSN : 7552-2779

मूल्यम् : ₹ 150.00

मुद्रकः
**डी.वी. प्रिंटर्स**
97-यू.बी., जवाहर नगर, दिल्ली-110007

प्रो. श्रीनिवास वरखेड़ी
कुलपतिः
केन्द्रीयसंस्कृतविश्वविद्यालयः
संसदः अधिनियमेन स्थापितः
(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्,
भारतसर्वकारस्य शिक्षामन्त्रालयाधीनम्)



Prof. Shrinivasa Varakhedi
Vice-Chancellor
Central Sanskrit University
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan,
Under Ministry of Education, Govt. of India)




के.सं.वि./कुलपति/101/2022-23/350 दिनांक:- 03.10.2022

## शुभाशंसनम्

**विद्याः समस्तास्तव देवि भेदाः स्त्रियः समस्ताः सकला जगत्सु।**
**त्वयैकया पूरितमम्बयैतत् का ते स्तुतिः स्तव्यपरा परोक्तिः॥**

**मातुः पराम्बायाः श्रीवैष्णव्याः पावनधाम्नि सुप्रतिष्ठितः परम्पराप्रदत्तप्राच्यविद्या-प्रचारप्रसारकः विद्वत्कुलसंसेवितः केन्द्रीयसंस्कृतविश्वविद्यालयस्य श्रीरणवीरपरिसरः अतीव** प्रसिद्धो वर्तते। तत्राध्ययनाध्यापनकौशलभरितोऽयं **शिक्षाशास्त्रविभागःशास्त्राणां संरक्षणाय-प्रयतते, अनुदिनंनैकानि उद्देश्यानि सम्पादयति। तस्मिन्नेव क्रमे प्रतिवर्षमिवास्मिन् शैक्षिकसत्रे'शिक्षामृतम्' इत्यन्वर्थाभिधायिनीं** यूजीसीकेयरमानितां शोधपत्रिकांप्रकाशयति, पत्रिकायामस्यां नैकशास्त्रनिष्णातां विद्वत्तल्लजानां विपश्चितां विचाराः प्रकाशयन्ते। विविधविद्याविषयकाः एते विचाराः संस्कृतसमाराधकेभ्यः अतीव रुचिकराः तोषकराः च भविष्यन्तीति विश्वसिमि, अपि चायतनसमाजे संस्कृतशास्त्रे निहितानां विचाराणां प्रसारः समाजे विद्यमानान् नैकान् दोषान् अपाकर्तुं उन्नतिपथं चानेतुं प्रभवति। एवञ्चाध्यापकशिक्षायामपि गुणवत्तापूर्णकार्यसम्पादने महद् योगदानं करिष्यति । एतदर्थं शोधपत्रिकायाः सफलसम्पादनाय समेभ्यः सम्पादकमण्डलसदस्येभ्यः सहयोगिजनेभ्यश्च भूरिशः साधुवादवचांसि वितनोमि।

**।। सर्वमङ्गलप्रदायिनी माता वैष्णवी सर्वेषां मङ्गलं कलयतु इति शम् ।।**

Shivara

**(प्रो.श्रीनिवासवरखेडी)**
कुलपतिः

प्रो. रणजित कुमार बर्मन
कुलसचिव (प्र.)
केन्द्रीय संस्कृत विश्वविद्यालय
संसद के अधिनियम द्वारा स्थापित
(पूर्व में राष्ट्रिय संस्कृत संस्थान,
शिक्षा मन्त्रालय, भारत सरकार के अधीन)



Prof. Ranjit Kumar Barman
Registrar (I/c)
Central Sanskrit University
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan,
Under Ministry of Education, Govt. of India)




## शुभाशंसा

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः ।
देवा नोयथा सदमिद् वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ॥

महतोऽयं हर्षस्य विषयः यत् केन्द्रीयसंस्कृतविश्वविद्यालयस्य जम्मूस्थश्रीरणवीर परिसरस्य शिक्षाविद्याशाखायाः प्रतिवर्षमिव ऐषमः शिक्षामृतम् इत्याख्या यूजीसीकेयरमानिता शोधपत्रिका प्रकाश्यमाना वर्तते । पत्रिकायामस्यां संस्कृत-हिन्दी-आङ्ग्लादिभाषाभिः शिक्षाशास्त्रविषयकलेखाः, इतरशास्त्रसम्बन्धिनः लेखाश्च, प्रकाश्यन्ते। किञ्च पत्रिकेयं लेखकानां लेखनप्रवृत्तिं प्रोत्साहयितुं, पठनकौशलञ्चाभिवर्धयितुं भृशमुपकरिष्यन्तीति आशासे ।

एवञ्च पत्रिकायाः अस्याः सफलसम्पादनाय प्रकाशनमण्डलसदस्येभ्यः विहितोऽयं प्रयासः सदाभिनन्दनीयः ।

इत्थं भगवतीभारत्यशेषकृपया समेषापि प्रतिभावतां प्रतिभाः निरन्तरं भान्त्विति श्रीवैष्णव्याः चरणयोः मङ्गलकामनां कामयता विरम्यते ।

R.K. Barman.
(प्रो.रणजितकुमारबर्मनः)
कुलसचिवःप्रभारी

56-57, सांस्थानिक क्षेत्र, जनकपुरी, नई दिल्ली - 110058
56-57, Institutional Area, Janakpuri, New Delhi - 110058 (INDIA)
**Ph. No.: (O)** 011-28520979, **EPABX** : 28524993, 28521994, 28524995
**EMAIL** : registrar@csu.co.in / pa2registrar@csu.co.in, **WEBSITE** : www.sanskrit.nic.in

केन्द्रीयसंस्कृतविश्वविद्यालयः
श्रीरणवीरपरिसरः,
कोट-भलवालः, जम्मू 181122
संसदः अधिनियमेन स्थापितः
(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्, मानितविश्वविद्यालयः)
भारतसर्वकारशिक्षामन्त्रालयाधीनः



CENTRAL SANSKRIT UNIVERSITY
Shri Ranbir Campus,
Kot-Bhalwal, Jammu- 181122
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan
Deemed to be University)
Under Ministry of Education, Govt. of India

क्रमांक / No. के.सं.वि.।पत्रिका।2022-23/1399 दिनांक / Date 29-09-2022

# शुभाशंसा

**न वि विद्यते यद्यपि पूर्व वासना गुणानुवन्धि प्रतिभानमद्भुतम् ।**
**श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम् ॥**

भारतदेशः संस्कृतं संस्कृतिश्चाधिकृत्य विश्वगुरु इति गौरवपदं समलङ्करोति । अन्ये समुन्नताः समुन्नतिपथे प्रवर्तमानाः विश्वविख्याताः देशाः आर्थिकदृष्ट्या यावदुन्नताः भवन्तु, परन्तु मानवीयता,विश्वबन्धुता,विश्वैकता, विश्वशान्तिः भारतस्यामूल्यनिधिश्च संस्कृतेन सम्प्राप्तुं शक्यते । अत एवास्मिन् काले संस्कृतभाषायाः उपादेयता समनुभूयते । अपि च व्यावहारिकज्ञानस्यापि ह्रासत्वमनुभूयते तदर्थं भारतीयसंस्कृतेः परमावश्यकता वर्तते इति ।

श्रीरणवीरपरिसरः, एतादृशविशिष्टकार्यं सम्पादयितुं संस्कृतज्ञानसम्वर्धनाय संस्कृते नूतनप्रविधीनामनुप्रयोगाय च तत्परो वर्तते । **शिक्षामृतम्** इत्याख्या यूजीसीकेयरमानिताशोधपत्रिका प्रकाश्यते । पत्रिका स्वलक्ष्यसम्पादने समर्था भविष्यतीति विश्वसिमः । महत अस्य कार्यस्य सिद्ध्यर्थं सर्वेभ्यः सम्पादकमण्डलसदस्येभ्यः सहयोगिजनेभ्यश्च साधुवादान् वितनोमि ।

(प्रो. मदनमोहनझाः)
निदेशकः

# सम्पादकीयम्

**महो अर्णः सरस्वती प्रचेतयति केतुना।**
**धियो विश्वा विराजति॥**

सर्वमङ्गलप्रदायिन्याः श्रीवैष्णव्याः देव्याः चरणपादयुगले केन्द्रीयसंस्कृतविश्व-विद्यालयस्य श्रीरणवीरपरिसराख्यं शिक्षाकेन्द्रं राराज्यते। परिसरेऽस्मिन् देववाण्याः परिपोषितायां पावनभूमौचिरकालात् सेवां कुर्वन् देदीप्यते शिक्षाविभागोऽयम्। अस्य परिसरस्य शिक्षाविद्याशाखापक्षतो भारतीयशिक्षाभूयिष्ठा ज्ञानविज्ञानसंवाहिनी प्रतिवर्षमिव प्रकाश्यमानेयं **शिक्षामृतम्** इत्याख्या यूजीसीकेयरमानिताशोधपत्रिका प्राचीनभारतीयशिक्षायाः भारतीय-संस्कृतेश्च आधारभूतं सत् विश्वस्मिन् ज्ञानं प्रसारयति। किञ्च शिक्षा हि ज्ञानसाधनीभूता सती बाह्यान्तरिकरूपेण विराजते इति शिक्षा एव प्रेयः श्रेयश्च इत्युभे लभ्येते। अतः शिक्षायाः द्विविधं प्रयोजनं प्रसिद्धमस्ति। यथोक्तमुपनिषदि-

**श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः।**
**श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते॥**

(कठोपनिषद् 1.2.2)

शिक्षायाः प्रयोजनं तदा एव सेत्सति यदा शिक्षकः छात्रान् पाठयेत् छात्राश्च शिक्षां मनसा गृह्णीयात्। सैषा ज्ञानपरम्परा सर्वजनं प्रति गच्छेयुः तदर्थं **शिक्षामृतम्** इति वार्षिकशोधपत्रिकायाम् आचार्याणाम् शोधच्छात्राणां विदुषाञ्च शोधलेखाः सुनिबद्धाः सन्ति। समेषां शैक्षिकलेखानां मौलिकविशेषता वर्तते। पत्रिकायामस्यां संस्कृत-हिन्दी-आङ्ग्लभाषाभिः शिक्षाशास्त्रविषयकलेखाः, इतरशास्त्रसम्बन्धिनः लेखाश्च, प्रकाश्यन्ते। पत्रिकायाम् अस्यां शुभाशंसां विलिख्य अनुगृहीतवद्भ्यः विविधविद्या-विद्योतितान्तःकरणेभ्यः छात्रवत्सलेभ्यः यशस्विकुलपतिवर्येभ्यः, कुलसचिवमहोदयेभ्यः, परिसरनिदेशकेभ्यः सर्वेभ्यः प्रेष्ठेभ्यः, विभागीयप्राध्यापकेभ्यः प्रकाशकेभ्यश्च साधुवादाः वितीर्यन्ते । 'न साधुमन्ये प्रयोगविज्ञानम्' इति कालिदासवचनं स्मारं स्मारं गुणैकपक्षपातिनो विपश्चितः अस्माकं मार्गदर्शनं विधास्यन्ति इति आशासे। विद्वद्भिः लिखिताः लेखाः सर्वथा विद्वद्समाजे सुप्रतिष्ठापिता भवतु इति भगवतीं वैष्णवीं प्रार्थ्यन् सम्पादकीय-वचनादुपसंहरामि।

**इत्थम् -सम्पादकौ**

# विषयानुक्रमणिका

**हिन्दी खण्ड**



**आंग्ल खण्ड**





शिक्षामृतम्, वर्ष-2022, अंक-13 ISSN : 2349-6452

# व्यावसायिकपाठ्यक्रमं प्रति माध्यमिकस्तरीयशिक्षार्थिनामभिरूचेः अध्ययनम्

**डॉ. ऋषिराज***

प्रमुखशब्दा-व्यावसायिकपाठ्यक्रमः, माध्यमिकशिक्षा, शिक्षार्थी, अभिरूचिः।

**शोधसारांशः**

पुरातनयुगेन आधुनिकयुगस्य तुलना क्रियते चेत्, साम्प्रतिकालः बहुपरिवर्तितो जातः। शैक्षिकव्यावसायिकयोः दृष्ट्यापि अस्माकं देशे बहुवेगेन परिवर्तमानो जायते। सर्वे जानन्ति यत अधुना विज्ञानतकनीकयोः युगमस्ति। युगेऽस्मिन् विज्ञानस्य नूतनाविष्कारेण औद्योगिकः पाराविद्धिकश्च विकासः जायते। समाजस्य प्रत्येकं क्षेत्रे परिवर्तनं संदृश्यते। वैज्ञानिकतकनीकयोः एवञ्च ज्ञानकौशलयोः प्रयोगेण मानवस्य विविधसमस्यानां समाधानं भवति। अद्य शैक्षिकसंस्थासु प्रचाल्यमान पाठ्यचर्यानुसारेण शिक्षायाः मूलोद्देश्यं "सा शिक्षा या नियुक्तये" इति निर्धार्यते। यया मानवजीवनं सुखमयं भविष्यति। अनेन कारणेन अधुना अधिकाधिकच्छात्राः व्यावसायिकपाठ्यक्रमं प्रति उन्मुखम् अभवत। प्रस्तुत शोधकार्यान्तर्गते व्यावसायिकपाठ्यक्रमं प्रति माध्यमिकस्तरीयशिक्षार्थिनामभिरूचेः परिज्ञानाय उद्देश्योऽयं शोधपत्रस्य।

**प्रस्तावना-**

सर्वे जानन्ति यत् जगत्यस्मिन् प्राणिषु मानवः सर्वश्रेष्ठप्राणी अस्ति। स्वजीवनयापनाय मानवः सर्वदा प्रयत्नशीलो भवति। प्रयत्नोऽयं शिक्षायाः माध्यमेन सफलो भवति। अतः मानवः आत्मानं निर्मातुं जीवनधाराञ्च सफलरीत्यां अग्रेसारयितुं शिक्षामेव अङ्गीकरोति। एतदर्थं वयं कथयितुं शक्नुमः यत् मानवीयविकासे शिक्षायाः महत्त्वपूर्णं योगदानं वर्तते। शैक्षिकदृष्ट्या शिक्षापदस्य व्युत्पत्तिः संस्कृतवाङ्मयानुसारं **शिक्ष्** विद्योपादाने इति धातोः **गुरोश्चहलः** इति पाणिनीयसूत्रेण **टाप्** प्रत्ययेन च निष्पद्यते। यस्यार्थः भवति-

* सहाचार्य, शिक्षा-शास्त्रविभाग, केन्द्रीयसंस्कृतविश्वविद्यालय, श्रीरणवीरपरिसरः, जम्मूः

"विद्याग्रहणम्", "ज्ञानार्जनम्" चेत्यादयः इति मन्यन्ते संस्कृताचार्याः। आङ्लभाषायां शिक्षाशब्दस्य रूपान्तरमस्ति-"Education"। "Education" इति पदस्योत्पत्तिः लैटिनभाषायाः मूलशब्दः "Educatum" एड्यूकेटम पदेन मन्यते। शब्दोऽयं द्वाभ्याञ्छब्दाभ्यां निष्पद्यते। तौ शब्दौ क्रमशः 'E' तथा 'Duco' स्तः। 'E' शब्दस्यार्थो भवति-अन्तःस्थले निहितम्। एवञ्च 'Duco' शब्दस्याभिप्रायो भवति-अग्रसारणं बहिरानयनं वा। अनेन प्रकारेण "Education" शब्दस्याभिप्रायो भवति- "अन्तःस्थलेनिहितशक्तीनां बहिरानयनम्"। बालकस्य सर्वाङ्गीणविकासरेव शिक्षायाः प्रमुखमुद्देश्यं भवति। शिक्षायाः उद्देश्यानि द्विधा विभज्यत- यथा प्रथमं पारम्परिकशिक्षायाः उद्देश्यानि- ज्ञानप्राप्तिः, पुरुषार्थप्राप्तिः, मोक्षप्राप्तिश्चेति। द्वितीयम् आधुनिकशिक्षायाः उद्देश्यानि- **"सा शिक्षा या नियुक्तये"** श्रुत्यानुसारेण शिक्षार्थिषु आत्मनिर्भरतायाः भावनायाः विकासः एवञ्च लोकतान्त्रिक-भावनायाः विकासकरणं चेत्यादयः।

- फ्राबेलमहोदयेनपि उक्तम्-**'शिक्षानाम एषा प्रक्रिया वर्तते, यया बालकः जन्मजात- शक्तीनां बहिः प्रकटनं कर्त्तुं शक्नुयात्**'[1]।
- जानड्यूवीमहोदयानुसारम्- **'जीवनयापनप्रक्रिया एव शिक्षा**'[2]।
- महात्मागान्धीमहोदयः वदति- **'बालके मनुष्ये च शारीरिक-मानसिक-आध्यत्मिकशक्तीनाम् उत्तमोत्तमसर्वाङ्गीणविकासः एव शिक्षा**'[3]।

भारतीयशिक्षापद्धतेरनुसारं शैक्षिकसंस्थासु प्रदीयमाना शिक्षाव्यवस्था त्रिविधाः भवन्ति। यस्य विश्लेषणम् अत्र क्रियते यथा-




शिक्षा एका व्यापकप्रक्रियाऽस्ति यया मानवव्यक्तित्वस्य निर्माणं भवति। शिक्षायाः अभावे मानवजीवनं निराधारम् अन्धकारमयञ्च भवति। शिक्षायाः माध्यमेनैव मानवस्य, परिवारस्य, समाजस्य, राष्ट्रस्य, सभ्यतायाः संस्कृतेश्च विकासः सुनिश्चितं भवति।

---

1. शिक्षादर्शन, डॉ. रमाशंकर पाण्डेय
2. तथैव
3. शिक्षायाः दार्शनिकाधारः, डॉ. सोमनाथसाहूः

आधुनिककाले औपचारिकरूपेण बालकेभ्यः शिक्षायाः उत्तरदायित्वं विद्यालयोपरि अस्ति। अधुना शैक्षिकसंस्थासु अध्ययनरतशिक्षार्थिनां कृते व्यवसायप्रदानकरणमेव औपचारिकशिक्षायाः प्रमुखमुद्देश्यं वर्तते। प्रस्तुतोद्देश्यं पूर्त्यर्थं प्रति शैक्षिकसंस्थासु माध्यमिकस्तरात् एव बालानां कृते व्यावसायिकपाठ्यक्रमस्य व्यवस्थाप्यते। वयं जानीमः यत् अस्माकं राष्ट्रः जनसंख्यादृष्ट्या सम्पूर्णजगति द्वितीयस्थाने अवस्थितः। एतस्मात् कारणात् अस्माकं राष्ट्रे वृत्तिः समस्योच्चस्तरे दरीदृश्यते। अत एव सर्वेजनाः बालकाश्चापि मन्यन्ते यत् मानवजीवनस्य किशोरावस्थायामैव सः वृत्तिः प्राप्तकरणे समर्थाः भवितुमर्हति। एतदर्थं बालकाः दशमीकक्षोपरान्तं प्रति शिक्षासंस्थासु औपचारिकाऽनौपचारिकरूपेण व्यावसायिक-पाठ्यक्रमे प्रवेशोपरान्तं व्यावसायिकज्ञानप्राप्तुं लालायिता भवन्ति। उच्चमाध्यमिकस्तरे पाठ्यचर्यान्तर्गते बालकबालिकयोः कृते व्यावसायिक-शिक्षादृष्ट्या निम्नाङ्कितपाठ्यक्रमाः सञ्चालयते तद्यथा- ITI, Nursing, Home Science, Beauty Therapy, Beekeeping, Web Development, Hair Care & Style, NSQF, Handloom Weaving, Preservation of Fruits & Vegetables, Welding Technology, Certificate of Toy Making, Solar Energy Technician, Footwear Design & Production, Agriculture इत्यादिः विषयानां प्रशिक्षणं सद्यस्कः (Online) द्वारा उच्चमाध्यमिकप्रशिक्षणसंस्थासु प्रदीयते। एतेषां विषयानाम् अध्ययन-अध्यापनाय औपचारिकाऽनौपचारिकरूपेण छात्राणां कृते बहूद्देश्यीय विद्यालयेषु Open Educational Resources इत्यस्य माध्यमेन व्यवस्थीयते। Online Course Material इति अधिगमोपकरणानां माध्यमेन छात्राः स्वरुच्यनुसारम् अधिगमं कर्त्तुं शक्नुयुः।

### अभिरुचेः स्वरूपम् ( Interest Defination )

अभिरुचिः एकं मनोवैज्ञानिकपदमस्ति। आंग्लभाषायां (Interest) इति कथ्यते। मानवीयदृष्ट्या अभिरुचिः ज्ञानात्मकं भावात्मकं क्रियात्मकञ्च भवति। अभिरुचिः मानवेः सम्पूर्ण-व्यक्तित्वस्य एकः महत्त्वपूर्णांशः वर्तते। मनोवैज्ञानिकदृष्ट्या मानवेषु रङ्ग-रूप-आकारगठन-मानसिकयोग्यता-स्वभाव-आचार-विचार-बुद्धि-अभिवृत्त्यादीवत् अभिरुचिषु वैयक्तिकविभिन्नता परि-लक्ष्यते। मनोवैज्ञानिकां मते मानवेषु अभिरुचिः विविधाः भवन्ति। सर्वे जानन्ति यत् विभिन्नविषय-प्रकरणव्यक्तिवस्तुक्रियाव्यवसायं प्रति व्यक्तेः अभिरुचिः भिन्ना भवन्ति। तद्यथा- कश्चन क्रीडकाः भवितुमिच्छन्ति, कश्चन चिकित्सकाः भवितुमिच्छन्ति, कश्चन सैनिकाः भवितुमिच्छन्ति, कश्चन व्यावसायिकाः भवितुमिच्छन्ति, कश्चन अभियन्ताः भवितुमिच्छन्ति, कश्चन शिक्षकाः भवितुमिच्छन्ति चेत्यादयः।

**शोधकार्यस्योद्देश्यानि–**

उद्देश्यं विना कस्मिन्नपि कार्ये सफलतायाः प्राप्तिर्नभवति। अतः कार्यस्य निर्धारणात् प्राक् कार्यानुगुणमुद्देश्यानां निर्धारणम् अवश्यं करणीयम्। शोधकार्येऽस्मिन् अधोनिर्दिष्टानि उद्देश्यानि समुपस्थाप्यन्ते। तद्यथा–

- उच्चमाध्यमिकप्रशिक्षणसंस्थासु सञ्चालितव्यावसायिकपाठ्यक्रमस्य अध्ययनम्।
- व्यावसायिकपाठ्यक्रमं प्रत्यभिरूच्या सम्बद्ध माध्यमिकस्तरीयशिक्षार्थिनामभि-मतस्य अध्ययनम्।
- औद्योगिकीप्रशिक्षणसंस्थाः (ITI), प्रारम्भिकचिकित्सा (Nursing) व्यावसायिक-पाठ्यक्रमं प्रत्यभि-रूच्या सम्बद्ध बालकबालिकयोर्मध्ये सार्थकभेदः अस्ति न वा इत्यस्याध्ययनम्।

**शोधकार्यस्य प्राक्कल्पना–**

प्रस्तुतसमस्यानुरूपं शोधकार्येऽस्मिन् अधोलिखितशोधप्राक्कल्पना निर्मीयते। तद्यथा–

1. व्यावसायिकपाठ्यक्रमं प्रत्यभिरुच्या सम्बद्ध माध्यमिकस्तरीयशिक्षार्थिनामभि-मतं सकारात्मकं भवितुमर्हति।
2. औद्योगिकीप्रशिक्षणसंस्थायाः (ITI) व्यावसायिकपाठ्यक्रमं प्रत्यभिरुच्या सम्बद्ध बालक-बालिकयोर्मध्ये कोऽपि सार्थकभेदः न स्यात्।
3. प्रारम्भिकचिकित्सा (Nursing) व्यावसायिकपाठ्यक्रमं प्रत्यभिरुच्या सम्बद्ध-बालक-बालिकयोर्मध्ये कोऽपि सार्थकभेदः न स्यात्।

**2. शोधसीमाङ्कनम्–**

समस्यायाः व्यापकरुपं मनसि निधाय शोधकर्त्रा शोधकार्ये दोषान् परिहाराय स्वाध्यायनस्य सीमाङ्कनं करोति। प्रस्तुतशोधकार्ये अत्यधिकविस्तार भयात् शोधकर्त्रा अधोलिखितरूपेण सीमाङ्कनं कृतम्–

- **विषयसीमाङ्कनम्–** शोधकार्येऽस्मिन् माध्यमिकस्तरीयच्छात्रेषु माध्यमिकशिक्षोपरान्ते व्यावसायिकाभिरुचिं परिज्ञानाय अध्ययनमस्ति। प्रस्तुतशोधकार्यं उच्चमाध्यमिक-प्रशिक्षणसंस्थासु सञ्चालित पाठ्यक्रमात् केवलम् औद्योगिकप्रशिक्षणसंस्थायाः (ITI) पाठ्यक्रमं, प्रारम्भिक चिकित्सा (Nursing) पाठ्यक्रमित्यस्यपोरि अध्ययनमस्ति।

- **क्षेत्रसीमाङ्कनम्**- प्रस्तुतशोधकार्यं केवलं राजस्थानप्रदेशस्य भरतपुरजिल्लापर्यन्तमेव सुनिश्चितमस्ति।
- **न्यादर्शसीमाङ्कनम्**- प्रकृतशोधकार्ये भरतपुरजिल्लायाः 100 संख्यकं माध्यमिक-स्तरीयच्छात्राः न्यादर्शत्वेन स्वीकृताः।

**3. विधिप्रविधिः-**

प्रस्तुतशोधसमस्यायाः समाधानाय निर्मितोद्देश्याधारितप्राक्कल्पनानां परीक्षणार्थं शोधकर्ता शोधाध्ययनाय सर्वेक्षणविधेः प्रयोगं कृतवान्।

**4. न्यादर्शः-**

प्रकृत्यानुसन्धाने शोधकर्त्रा असम्भाव्यन्यादर्शस्य अन्तर्गते सोद्देश्यन्यादर्शस्य उपयोगः क्रियते। राजस्थानप्रदेशस्य भरतपुरजिल्लायाः विद्यालयेषु नामाङ्कितः माध्यमिकस्तरीय-सम्पूर्णछात्रेषु सोद्देश्यानुसारं 100 छात्रेषु 50 बालकाः एवञ्च 50 बालिकाः च स्वीकृताः।

**5. चरराशयः-**

प्रकृत्यानुसन्धाने शोधकर्त्रा प्राक्कल्पनायाः परीक्षणनिमित्तं सर्वेक्षणविधेरनुरूपं स्वतन्त्रचररूपेण व्यावसायिकपाठ्यक्रमः स्वीक्रियते। एवञ्च आश्रितचररूपेण माध्यमिक-स्तरीयच्छात्रेषु अभिरुचिः स्वीकरोति। तथा च शोधकार्येऽस्मिन् माध्यमिकस्तरीयच्छात्राणां लिङ्गम्, आयुः, वातावरणं च मध्यवर्तीचरत्वेन शोधकर्ता स्वीक्रियते।

**उपकरणम्**-प्रस्तुतशोधकार्ये शोधकर्ता छात्रेषु व्यावसायिकाभिरुचिं मापनार्थं अभिमताधारित अप्रतिबन्धितप्रश्नावल्याः उपकरणत्वेन स्वीक्रियते।

**साङ्ख्यकीयविश्लेषणम्**- शोधकर्ता प्रस्तुतशोधकार्ये प्रयुक्तऽप्रतिबन्धित प्रश्नावलीद्वारा प्राप्तप्रदत्तानां विश्लेषणाय अधोलिखित सांख्यिक्याः प्रयोगं कृतवान्। तद्यथा-

**1. प्रतिशतम् ( Percentage )**

$$\text{सूत्रम्} = \frac{\text{अभिमतानां संख्याः}}{\text{अभिमतानांयोगः}} \times 100$$

**2. काई-वर्ग परीक्षणम् ( Chi-Square Test )**

सैद्धान्तिकरूपेण प्राप्तपरिणामेन सह प्रायोगिकरूपेण प्राप्तपरिणामस्य प्राक्कल्पनायाः

तुलनात्मकविश्लेषणाय परीक्षणमिदमुपयोगी भवति।

सूत्रम् $x^2=\Sigma \frac{(fo-f)^2}{(fe)}$

शोधकर्ता प्रस्तुतशोधकार्ययैः सम्बद्ध उद्देश्याधारित प्राक्कल्पनानां परिक्षणार्थ उपकरणद्वारा सङ्कलितप्रदत्तानां विश्लेषणं व्याख्यानञ्च अधोलिखितरूपेण प्रस्तूयते–

प्राक्कल्पना सं.–01 ***"व्यावसायिकपाठ्यक्रमं प्रत्यभिरूचयः सम्बद्ध माध्यमिक- स्तरीयशिक्षार्थिनामभिमतंसकारात्मकं भवितुमर्हति"***।

प्रस्तुतप्राक्कल्पनायाः परीक्षणाय सत्यापनाय च शोधकर्ता शोधकार्ययैः सम्बद्ध व्यावसायिक–रुच्याभिमतावल्युपकरणस्याधारे प्रयुक्तसाङ्ख्यिकीयविधिना **"प्रतिशतस्य ( % )"** सहयोगेन शिक्षार्थिनां प्राप्ताभिमतस्य अध्ययनं कृतवान्। यासां तथ्यात्मकविवरणं अधः शोधकर्त्रा प्रस्तूयते–

**सारणी सं.–01**

**व्यावसायिकपाठ्यक्रमं प्रत्यभिरूचया सम्बद्ध माध्यमिकस्तरीयशिक्षार्थिनाम-भिमतानां प्रस्तुतीकरण**

| क्र. सं. | अभिमतम् | शिक्षार्थिनामभिमतम् कथनानां संख्या = 12 न्यादर्शाः = 100 | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| | व्यावसायिक पाठ्य-क्रमस्य नाम | पूर्ण सहमत् | % | सह-मत् | % | असह-मत् | % | पूर्ण-योगः | % |
| 01. | औद्योगिकीप्रशिक्षण(ITI) पाठ्यक्रमे | 258 | 48.40 | 220 | 53.92 | 122 | 47.10 | 600 | 50 |
| 02. | प्रारम्भिकचिकित्सा (Nursing) पाठ्यक्रमे | 275 | 51.59 | 188 | 46.07 | 137 | 52.89 | 600 | 50 |
| | समूहयो अभिमतानां महायोग | 533 | 44.41 | 408 | 34 | 259 | 21.59 | 1200 | 100% |

प्रस्तुतसारणी सं. 01 इत्यस्य अवलोकनेन स्पष्टं क्रीयते यत् उपकरणरूपेण प्रयुक्तव्यावसायिक रुच्यभिमतावली इत्यस्य माध्यमेन चयनितन्यादर्शरूपेण शिक्षार्थिनाम् (50+50 = 100) अधोलिखिताभिमतं प्राप्तम्–

❖ **औद्योगिकीप्रशिक्षण ( ITI )** पाठ्यक्रमं प्रति शिक्षार्थिनाम् अभिरुचेः सम्बद्ध पूर्णसहमतरूपेण 48.40%, सहमतरूपेण 53.92%, असहमतरूपेण 47.10% च

अभिमतं प्रदत्तम्।

- **प्रारम्भिकचिकित्सा ( Nursing )** पाठ्यक्रमं प्रति शिक्षार्थिनाम् अभिरुचेः सम्बद्धपूर्णसहमतरूपेण 51.59%, सहमतरूपेण 46.07%, असहमतरूपेण 52. 89% च अभिमतं प्रदत्तम्।

- **व्यावसायिकपाठ्यक्रमं प्रत्यभिरूच्याः सम्बद्ध शिक्षार्थिनां समूहयोः** पूर्णसहमतरूपेण 44.41%, सहमतरूपेण 34%, असहमतरूपेण 21.59% च अभिमतं प्रदत्तम्।

दण्डारेख सं. 01

**व्यावसायिकपाठ्यक्रमं प्रत्यभिरूच्याः सम्बद्ध माध्यमिकस्तरीयशिक्षार्थिनां प्रतिशतरूपेण ( % )" अभिमतानां दण्डारेखः**




**व्याख्या-**

प्रस्तुतसारणी सं. 01 इत्यस्य विवेचनोपरान्तं विश्लेषणं कृत्वा वक्तुं शक्नुमः यत् उच्चमाध्यमिकप्रशिक्षणविद्यालयेषु सञ्चालितव्यावसायिकौद्योगिकीप्रशिक्षण (ITI) पाठ्यक्रमं प्रति शिक्षार्थीना-मभिरूचिः अधिकं सकारात्मिका भवतीति माध्यमिकस्तरीय बालक-बालिकाः स्वयमेव चिन्तयन्ति। यतो हि वर्तमानपरिस्थितौ बालका-बालिकाः स्वावलम्बनमिति भावनया शीघ्रातिशीघ्रमात्मनिर्भरं भवितुम् उच्चशिक्षायां न प्रविश्य माध्यमिकशिक्षाप्राप्त्यनन्तरं व्यावसायिकपाठ्यक्रमरूपेण औद्योगिकी-प्रशिक्षण (ITI) पाठ्यक्रमस्य चयनम् अधिकमुचितमिति चिन्तयन्ति।

माध्यमिकस्तरीयबालक-बालिका: चिन्तयन्ति यत् उच्चमाध्यमिकप्रशिक्षणविद्यालयेषु सञ्चालितप्रारम्भिकचिकित्सा (Nursing) इति पाठ्यक्रमं प्रति शिक्षार्थीनामभिरुचि: अधिकं सकारात्मिका अस्तीति। यतो हि वर्तमानपरिस्थितौ बालक-बालिका: च स्वावलम्बनेन शीघ्रातिशीघ्रम् आत्मनिर्भरतया सह समाजसेवां कर्तुं प्रयासरता: सन्ति। एतस्मात् किशोरावस्थायामेव सामाजिक-सम्मानं प्राप्तये उच्चशिक्षां विहाय माध्यमिकशिक्षा-प्राप्त्यनन्तरं व्यावसायिकपाठ्यक्रमरूपेण प्रारम्भिक-चिकित्सा (Nursing) पाठ्यक्रमस्य चयनमधिकमुचितमिति ते चिन्तयन्ति।

प्राक्कल्पना सं.-02 ***औद्योगिकीप्रशिक्षणसंस्थाया: (ITI) व्यावसायिक-पाठ्यक्रमं प्रत्यभिरुच्या सम्बद्ध बालक-बालिकयोर्मध्ये कोऽपि सार्थकभेद: न स्यात्।***

प्रस्तुतप्राक्कल्पनाया: परीक्षणाय सत्यापनाय शोधकर्ता शोधकार्ययै: सम्बद्ध व्यावसायिकरुच्याभिमतावल्युपकरणस्याधारे प्रयुक्तसाङ्ख्यकीयविधिना स्वतन्त्रवितरण प्राक्कल्पनाधारे आसंगसारण्या-नुसारेण "काई वर्ग ($x^2$)" सहयोगेन औद्योगिकीप्रशिक्षण-संस्थाया: (ITI) व्यावसायिकपाठ्यक्रमं प्रत्यभिरुच्या सम्बद्ध बालक-बालिकयो: प्राप्ताभिमतानामध्ययनं कृतवान्। यासां तथ्यात्मकविवरणं अध: शोधकर्त्रा प्रस्तूयते-

**आसंगसारणी सं.-02**

**औद्योगिकीप्रशिक्षणसंस्थाया: (ITI) व्यावसायिकपाठ्यक्रमं प्रत्यभिरुच्या: सम्बद्ध बालक-बालिकयो: प्राप्ताभिमतानां "काई वर्ग ($x^2$)" इत्याधारे प्रस्तुति:**

| क्र. सं. | व्यावसायिक पाठ्यक्रमस्य नाम / वर्ग: | | औद्योगिकीप्रशिक्षण (ITI) पाठ्यक्रमे कथनानां संख्या = 06 न्यादर्शा: = 100 | | | |
|---|---|---|---|---|---|---|
| | | N | पूर्ण-सहमत् | सहमत् | असहमत् | पूर्णयोग: |
| 01. | बालकानाम् अभिमतम् ($fo_1$) | 50 | 137 | 114 | 49 | 300 |
| 02. | बालिकानाम् अभिमतम् ($fo_2$) | 50 | 121 | 106 | 73 | 300 |
| | अभिमतानां योग: | | 258 | 220 | 122 | 600 |
| | | काई वर्गानुसारं गणना | | | | |
| | बालकानाम् ($fe_1$) | 50 | 129 | 110 | 61 | 300 |
| | बालिकानाम् ($fe_2$) | 50 | 129 | 110 | 61 | 300 |

| | | **काई वर्गानुसारं बालानां गणनाकार्यम्** | | | |
|---|---|---|---|---|---|
| (fo-fe) | | 8 | 4 | −12 | |
| (fo-fe)2 | | 64 | 16 | 144 | |
| (fo-fe)2<br>fe | | 0.49 | 0.14 | 2.36 | |
| | | **काई वर्गानुसारं बालिकानां गणनाकार्यम्** | | | |
| (fo-fe) | | −8 | −4 | 12 | |
| (fo-fe)2 | | 64 | 16 | 144 | |
| (fo-fe)2<br>fe | | 0.49 | 0.14 | 2.36 | |

$\Sigma X^2$= 0.49+0.14+2.36+0.49+0.14+2.36 = 5.91

df = ( r-1) (c-1) = (2-1) (3-1) = 1x2 = 2

**प्रस्तुतप्रक्रियायाः गणनोपरान्तं प्राप्त क्रान्तिकमानम् = 5.91'**

**काई वर्गतालिकानुसारं 0.05 सार्थकतास्तरे प्रमाणितक्रान्तिकमानम् = 5.991**

***0.05 सार्थकतास्तरे सार्थकभेदः नास्ति।**

प्रस्तुतसारणी सं. 02 इत्यस्य अवलोकनेन स्पष्टीयते यत् उपकरणरूपेण प्रयुक्तव्यावसायिक-रुच्यभिमतावलीत्यस्य माध्यमेन चयनितन्यादर्शरूपेण बालकेभ्यः बालिकाभ्यश्च (50+50 = 100) अधोलिखिताभिमतं प्राप्तम्- औद्योगिकीप्रशिक्षण (ITI) पाठ्यक्रमं प्रति बालकानामभिरुच्या सह प्रेक्षितावृत्तिरूपेण (fo) पूर्णसहमतरूपेण 137 सहमतरूपेण 114 असहमतरूपेण 49 च अभिमतं प्राप्तवान्। तथा च बालिकानामभिरुच्या सह प्रेक्षितावृत्तिरूपेण (fo) पूर्णसहमतरूपेण 121 सहमतरूपेण 106 असहमतरूपेण 73 च अभिमतं प्राप्तवान्। द्वयोर्समूहयोः प्रत्याशितावृत्तिः (fe) पूर्णसहमतरूपेण 129 सहमतरूपेण 110 असहमतरूपेण 61 प्राप्ता। काई-वर्गानुसारं गणनोपरान्तं $\Sigma x^2$= 5.91 मानं समागतं। यः काई-वर्गसारण्यानुसारं 0.05 सार्थकतास्तरे स्वतन्त्रांशे =02 इत्याधारे प्रमाणित क्रान्तिकमानात् (5.991) न्यूनाः प्राप्ताः। अतः उच्चमाध्यमिकप्रशिक्षणविद्यालयेषु सञ्चालितौद्योगिकी प्रशिक्षण (ITI) पाठ्यक्रमं प्रति व्यावसायिकरुच्या सम्बद्ध बालकबालिकयोर्मध्ये सार्थकभेदः नास्ति। अतः प्रस्तुतप्राक्कल्पना स्वीकृता भवति।

**दण्डारेख सं. 02**

**औद्योगिकीप्रशिक्षणसंस्थायाः ( ITI ) व्यावसायिकपाठ्यक्रमं प्रत्यभिरुच्याः सम्बद्धबालक-बालिकयोः प्राप्ताभिमतानां "काई वर्ग ( $x^2$ )" इत्याधारे दण्डारेखः प्रस्तुतिः**




**व्याख्या-**

प्रस्तुतसारणी सं. 02 इत्यस्य विवेचनोपरान्तं विश्लेषणं कृत्वा वक्तुं शक्नुमः यत् उच्चमाध्यमिक-विद्यालयेषु सञ्चालितव्यावसायिकौद्योगिकीप्रशिक्षण (ITI) पाठ्यक्रमं प्रति शिक्षार्थीनामभिरूचिः अधिकं सकारात्मिका भवतीति माध्यमिकस्तरीय बालक-बालिकाः स्वयमेव चिन्तयन्ति। यतो हि वर्तमान-परिस्थितौ बालका-बालिकाः स्वावलम्बनमिति भावनया शीघ्रातिशीघ्रमात्मनिर्भरं भवितुम् उच्चशिक्षायां न प्रविश्य माध्यमिकशिक्षाप्राप्त्यनन्तरं व्यावसायिकपाठ्यक्रमरूपेण औद्योगिकीप्रशिक्षण (ITI) पाठ्य-क्रमस्य चयनम् अधिकमुचितमिति चिन्तयन्ति।

प्राक्कल्पना सं.-03 ***उच्चमाध्यमिकविद्यालयेषु सञ्चालितप्रारम्भिकचिकित्सा ( Nursing ) पाठ्यक्रमेन सम्बद्ध अभिरूचिं प्रति बालक-बालिकयोर्मध्ये कोऽपि सार्थकभेदः न स्यात्।***

प्रस्तुतप्राक्कल्पनायाः परीक्षणाय सत्यापनाय शोधकर्ता शोधकार्ययैः सम्बद्ध व्यावसायिकरुच्याभिमतावल्युपकरणस्याधारे प्रयुक्तसाङ्ख्यिकीयविधिना स्वतन्त्रवितरण प्राक्कल्पनाधारे आसंगसारण्या-नुसारेण "काई वर्ग ($x^2$)" सहयोगेन प्रारम्भिकचिकित्सा (Nursing) व्यावसायिकपाठ्यक्रमं प्रत्यभि-रुच्याः सम्बद्धबालक-बालिकयोः प्राप्ताभिमतानामध्ययनं कृतवान्। यासां तथ्यात्मकविवरणं अधः शोधकर्त्रा प्रस्तूयते-

## आसंगसारणी सं.-03

**प्रारम्भिकचिकित्सा ( छनतेपदह )व्यावसायिकपाठ्यक्रमं प्रत्यभिरुच्याः सम्बद्ध बालक-बालिकयोः प्राप्ताभिमतानां "काई वर्ग ( $x^2$ )" इत्याधारे प्रस्तुतिः**

| क्र. सं. | व्यावसायिक पाठ्यक्रमस्य नाम | N | प्रारम्भिकचिकित्सा (Nursing) पाठ्यक्रमः कथनानां संख्या = 06 न्यादर्शाः = 100 | | | |
|---|---|---|---|---|---|---|
| | **वर्गः** | | **पूर्ण-सहमत्** | **सहमत्** | **असहमत्** | **पूर्णयोगः** |
| 01. | बालकानाम् अभिमतम् (fo) | 50 | 142 | 87 | 71 | 300 |
| 02. | बालिकानाम् अभिमतम् (fo) | 50 | 133 | 109 | 58 | 300 |
| | अभिमतानां योगः | 100 | 275 | 196 | 129 | 600 |
| | | | **काई वर्गानुसारं गणना** | | | |
| | बालकानाम् (fe) | 50 | 137.5 | 98 | 64.5 | 300 |
| | बालिकानाम् (fe) | 50 | 137.5 | 98 | 64.5 | 300 |
| | | | **काई वर्गानुसारं बालानां गणनाकार्यम्** | | | |
| | (fo-fe) | | 4.5 | −11 | 6.5 | |
| | (fo-fe)2 | | 20.25 | 121 | 42.25 | |
| | (fo-fe)2 / fe | | 0.15 | 1.23 | 0.65 | |
| | | | **काई वर्गानुसारं बालिकानां गणनाकार्यम्** | | | |
| | (fo-fe) | | − 4.5 | 11 | − 6.5 | |
| | (fo-fe)2 | | 20.25 | 121 | 42.25 | |
| | (fo-fe)2 / fe | | 0.15 | 1.23 | 0.65 | |

$\Sigma x^2 =$ 0.15+1.23+0.65+0.15+1.23+0.65 = 4.06

df = ( y-1) (c-1) = (2-1) (3-1) = 1x2 = 2

**प्रस्तुतप्रक्रियायाः गणनोपरान्तं प्राप्त क्रान्तिकमानम्- 4.06 ***

**काई वर्गतालिकानुसारं 0.05 सार्थकतास्तरे प्रमाणितक्रान्तिकमानम्- 5.991**

***0.05 सार्थकतास्तरे सार्थकभेदः नास्ति।**

प्रस्तुतसारणी सं. 03 इत्यस्य अवलोकनेन स्पष्टीयते यत् उपकरणरूपेण प्रयुक्तव्यावसायिक-रुच्यभिमतावलीत्यस्य माध्यमेन चयनितन्यादर्शरूपेण बालकेभ्यः बालिकाभ्यश्च (50+50 = 100) अधोलिखिताभिमतं प्राप्तम् - प्रारम्भिकचिकित्सा (Nursing) पाठ्यक्रमं प्रति बालकानामभिरुच्या सह प्रेक्षितावृत्तिरूपेण (fo) पूर्णसहमतरूपेण 142 सहमतरूपेण 87 असहमतरूपेण 71 च अभिमतं प्राप्तवान्। तथा च बालिकानामभिरुच्या सह प्रेक्षितावृत्तिरूपेण (fo) पूर्णसहमतरूपेण 133 सहमतरूपेण 109 असहमतरूपेण 58 च अभिमतं प्राप्तवान्। द्वयोर्समूहयोः प्रत्याशितावृत्तिः (fe) पूर्णसहमतरूपेण 137.5 सहमतरूपेण 98 असहमतरूपेण 64.5 प्राप्ता। काई-वर्गानुसारं गणनोपरान्तं $\Sigma x^2$= 4.06 मानं समागतं। यः काई-वर्गसारण्यानुसारं 0.05 सार्थकतास्तरे स्वतन्त्रांशे =02 इत्याधारे प्रमाणित क्रान्तिकमानात् (5.991) न्यूनाः प्राप्ताः। अतः उच्चमाध्यमिकविद्यालयेषु सञ्चालित-प्रारम्भिकचिकित्सा (Nursing) पाठ्यक्रमं प्रति व्यावसायिकरुच्या सम्बद्ध बालकबालिकयोर्मध्ये सार्थकभेदः नास्ति। अतः प्रस्तुतप्राक्कल्पना स्वीकृता भवति।

## दण्डारेख सं. 03

**प्रारम्भिकचिकित्सा (Nursing) व्यावसायिकपाठ्यक्रमं प्रत्यभिरुच्याः सम्बद्ध बालक-बालिकयोः प्राप्ताभिमतानां "काई वर्ग ($x^2$)" इत्याधारे दण्डारेखः प्रस्तुतिः**




**व्याख्या-**

प्रस्तुतसारणी सं. 03 इत्यस्य विवेचनपरान्तं विश्लेषणं कृत्वा वक्तुं शक्नुमः यत् माध्यमिकस्तरीयबालक-बालिकाः चिन्तयन्ति यत् उच्चमाध्यमिकप्रशिक्षणविद्यालयेषु

सञ्चालित-प्रारम्भिकचिकित्सा (Nursing) इति पाठ्यक्रमं प्रति शिक्षार्थीनामभिरुचिः अधिकं सकारात्मिका अस्तीति। यतो हि वर्तमानपरिस्थितौ बालक-बालिकाः च स्वावलम्बनेन शीघ्रातिशीघ्रम् आत्मनिर्भरतया सह समाजसेवां कर्तुं प्रयासरताः सन्ति। एतस्मात् किशोरावस्थायामेव सामाजिक-सम्मानं प्राप्तये उच्चशिक्षां विहाय माध्यमिक-शिक्षाप्राप्त्यनन्तरं व्यावसायिकपाठ्यक्रमरूपेण प्रारम्भिक-चिकित्सा (Nursing) पाठ्यक्रमस्य चयनमधिकमुचितमिति ते चिन्तयन्ति।

**निष्कर्षाः**- उच्चमाध्यमिकप्रशिक्षणविद्यालयेषु सञ्चालितव्यावसायिकपाठ्यक्रमरूपेण औद्योगिकीप्रशिक्षणसंस्था-प्रारम्भिकचिकित्सापाठ्यक्रमयोः (ITI & Nursing) प्रति बालक-बालिकानाम् अभिरूचिः अधिकं सकारात्मिका भवतीति माध्यमिकस्तरीय बालक-बालिकाः स्वयमेव चिन्तयन्ति।

- उच्चमाध्यमिकप्रशिक्षणविद्यालयेषु सञ्चालितौद्योगिकीप्रशिक्षणसंस्थायाः (ITI) पाठ्यक्रमं प्रति व्यावसायिकरुच्यासम्बद्ध बालकबालिकयोर्मध्ये सार्थकभेदः नास्ति।
- उच्चमाध्यमिकप्रशिक्षणविद्यालयेषु सञ्चालितप्रारम्भिकचिकित्सा (Nursing) पाठ्यक्रमं प्रति व्यावसायिकरुच्यासम्बद्ध बालकबालिकयोर्मध्ये सार्थकभेदः नास्ति।

**परामर्शः**-

प्रस्तुतशोधकार्यस्य निष्कर्षोपरान्तं बालक-बालिकयोः कृत्ते तथा च शिक्षकानां कृते एवञ्च अभिभावकानां कृतेऽपि अधोलिखिताः परामर्शाः प्रस्तुताः तद्यथा- यत् उच्चमाध्यमिकप्रशिक्षण-विद्यालयेषु सञ्चालितव्यावसायिकपाठ्यक्रमरूपेण औद्योगिकी-प्रशिक्षण (ITI) पाठ्यक्रमं प्रति बालक-बालिकानामभिरूचिः अधिकं सकारात्मिका भवतीति माध्यमिकस्तरीय बालक-बालिकाः स्वयमेव चिन्तयन्ति। यतो हि वर्तमानपरिस्थितौ बालका-बालिकाः स्वावलम्बनमिति भावनया शीघ्राति-शीघ्रमात्मनिर्भरं भवितुम् उच्चशिक्षायां न प्रविश्य माध्यमिकशिक्षा प्राप्त्यनन्तरं व्यवसायिक-पाठ्यक्रमरूपेण औद्योगिकीप्रशिक्षण (ITI) पाठ्यक्रमस्य चयनम् अधिकम् उचितमिति चिन्तयन्ति।

माध्यमिकस्तरीयबालक-बालिकाः चिन्तयन्ति यत् उच्चमाध्यमिकप्रशिक्षणविद्यालयेषु सञ्चालित-व्यवसायिकप्रारम्भिकचिकित्सा (Nursing) इति पाठ्यक्रमं प्रति बालक-बालिकानाञ्च अभिरुचिः अधिकं सकारात्मिका अस्तीति। यतो हि वर्तमानपरिस्थितौ बालक-बालिकाः च स्वावलम्बनेन शीघ्रातिशीघ्रम् आत्मनिर्भरतया सह समाजसेवां कर्तुं

प्रयासरताः सन्ति। एतस्मात् किशोरावस्थायामेव सामाजिक-सम्मानं प्राप्तये उच्चशिक्षां विहाय माध्यमिकशिक्षा प्राप्त्यनन्तरं व्यावसायिकपाठ्यक्रमरूपेण प्रारम्भिक-चिकित्सा (Nursing) पाठ्यक्रमस्य चयनमधिकमुचितमिति ते चिन्तयन्ति।

**शैक्षिकनिहितार्थः**- सर्वे जानन्ति यत् जगत्यस्मिन् प्राणिषु मानवः सर्वश्रेष्ठप्राणीः अस्ति। स्वजीवनयापनाय मानवः सर्वदा प्रयत्नशीलो भवति। प्रयत्नोऽयं शिक्षायाः माध्यमेन सफलो भवन्ति। अतः शिक्षाद्वारा मानवः आत्मानं निर्मातुं जीवनधाराञ्च सफलरीत्यां अग्रेसारयितुं शिक्षामेव अङ्गीकरोति। वयं जानीमः यत् अस्माकं राष्ट्रः जनसंख्यादृष्ट्या सम्पूर्णजगति द्वितीयस्थाने अवस्थितः। एतस्मात् कारणात् अस्माकं राष्ट्रे वृत्तेः समस्योच्चस्तरे दरीदृश्यते। अत एव सर्वेजनाः बालकाश्चापि मन्यन्ते यत् मानवजीवनस्य किशोरावस्थायामैव सः वृत्तेः प्राप्तकरणे समर्थाः भवितुमर्हति। एतदर्थं बालकाः दशमीकक्षोपरान्तम् अनौपचारिकशिक्षायाः सहयोगेन दूरस्थशिक्षामाध्यमेन व्यावसायिकपाठ्यक्रमे प्रवेशग्रहणकृत्वा व्यावसायिकज्ञानप्राप्तं कुर्वन्ति। शिक्षणप्रक्रियायां नवाचारागमनकारणात् समाजस्य सर्वेषां वर्गाणां जनाः शिक्षां प्राप्नुयुः इति मनसि निधाय शिक्षाशास्त्रिणः नवीनशिक्षाप्रणाल्याः प्रवर्तनं कृतवन्तः। सा भवति अनौपचारिकशिक्षाप्रणाली। अनया प्रक्रियया समाजे आर्थिकरूपेण धनाड्यजनैः सहैव निर्धनजनान् अपि शिक्षायाः अवसरः प्राप्नुवन्ति। एषा व्यवस्था समाजस्य सर्वेषां कृते मुक्तस्वरूपा अस्ति। अस्यां प्रक्रियायां पाठ्यक्रमः, शिक्षाक्षेत्रं, शिक्षणसमयः, शिक्षायाः अवधिः च स्थिरं न भवति। परिस्थित्यनुसारम् अस्यां प्रक्रियायां परिवर्तनमपि कर्त्तुं शक्यते। मुक्तविद्यालयः, मुक्तविश्वविद्यालयः, पत्राचारशिक्षा, दूरस्थशिक्षा च एतस्या प्रणाल्याः उदाहरणत्वेन वक्तुं शक्यते।

**सन्दर्भग्रन्थसूची-**


- शर्मा डॉ. आर, ए. एवं चतुर्वेदी डॉ. शिखा, निर्देशन एवं परामर्श के मूल तत्व, आर. लाल बुक डिपो, मेरठ, (2014)।
- वर्मा, रामपाल सिंहशैक्षिक एवं व्यवसायिक निर्देशन तथा परामर्श, विनोद पुस्तकमन्दिर आगरा, (1989)।
- सिंह, डॉ. रामपाल एवं शर्मा, डॉ. ओ.पी., शैक्षिक अनुसन्धान एवं साङ्ख्यिकी, अग्रवाल पब्लिकेशन्स, आगरा-7, तृतीय संस्करण-2008।
- सिंह, डॉ. अरूणकुमार, शिक्षा मनोविज्ञान, भारती भवन पब्लिकेशन्स, पटना, 2007।

➢ दुवे, रमाकान्त, शौक्षिक एवं व्यवसायिक निर्देशन के मूलाधार, राजेश पब्लिशिंग हाउस, मेरठ, (1982)।

➢ गुप्ता, प्रो.एस.पि., गुप्ता, डॉ. अलका, सरल अनुसन्धान परिचय, शारदा पुस्तक भवन, इलाहाबाद, 2018।

➢ शर्मा, आर. ए., शैक्षिक अनुसन्धान, सूर्या पब्लिकेशन, मेरठ, 1996।



शिक्षामृतम्, वर्ष-2022, अंक-13 ISSN : 2349-6452

# ज्योतिषशास्त्रे ग्रहस्य वैज्ञानिकता

डॉ. रामदासशर्मा

**नक्षत्रसोमानां प्रतिष्ठायोनिरेव च।**
**चन्द्रर्क्षग्रहाः सर्वे विज्ञेयाः सूर्यसम्भवाः॥**

**शोधपत्रसारः**- असंख्याः ग्रहाः सन्ति, अन्यसौरमण्डलानि अपि भवितुम् अर्हन्ति इत्यादयः विचाराः भारतीये ज्योतिश्शास्त्रे रुढमूलाः सन्ति। ग्रहाणां स्थितिः सूर्यः, चन्द्रः, भौमः, बुधः, बृहस्पतिः, शुक्रः, शनिः। भूच्छायायाः चन्द्रकक्षापर्यन्तस्य नाम राहुः, या भूच्छाया चन्द्रकक्षामतीत्य सुदूरं बहिर्याति तस्याः नाम केतुः। परस्पराकर्षणं, ग्रहणस्वरूपम् इत्यादयः अत्र विस्तरेण उक्ताः। कुजग्रहस्य स्वरूपं सरक्तगौरः जीवसम्भाव्यतां प्रकाशयति। आधुनिकाः अपि एतत् एव वदन्ति खलु? 'सूर्यादीनां सञ्चातः भ्रममूलः', 'ग्रहाणां स्वप्रकाशता नास्ति'

भूगोलस्वरूपम्-

**मृदम्ब्वग्न्यनिलाकाशपिण्डोऽयं पाञ्चभौतिकः।**
**कपित्थफलवद्वृत्तः सर्वकेन्द्रेऽखिलाश्रयः॥**

**स्थिरा परेशशक्त्यैव सर्वगोलादधः स्थितः।**
**मध्ये समन्ताद्दण्डस्य भूगोले व्योम्नि तिष्ठति।**

मृज्जलतेजोवाय्वाकाशैः पञ्चमहाभूतैः निर्मितोऽयं पिण्डः भूगोलोऽस्ति। इयं धरा कपित्थफलवद्वृत्ताकारा न अपि तु वर्तुलाकारा अस्ति। सर्वगोलानां स्थितिविषयज्ञानार्थं भूगोलपिण्ड एव आधारभूतः। अत एव सर्ववृत्तानां केन्द्रीयभूतं भूकेन्द्रमेव। अयं भूगोलपिण्डः परब्रह्मणः धारणात्मिकया शक्त्या स्थिरा, अधुनातनां शब्देषु परस्परं सर्वगोलाः स्वस्वगुरुत्वाकर्षणशक्त्याऽन्योन्यमाकर्षन्ति। अनयैव शक्त्या सर्वगोलाः स्वस्वकक्षासु स्थिराः। गुरुत्वाकर्षणशक्तिरेव परब्रह्मणः धारणात्मिका शक्तिः। सर्वगोलानामधः अयं भूगोलः। अस्मिन् ब्रह्माण्डेऽन्तरिक्षे, आकाशे वा भूगोलः स्थितः।

* सहायकाचार्यः, ज्योतिषविभागः, केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीरणवीरपरिसरः, जम्मूः

**द्यौर्मे पिता जनिता नाभिरत्र**
**बन्धुर्मे माता पृथिवी महीयम्।**

पृथिवी सर्वेषामस्माकं धारयित्री पालयित्री सहजपरिचिता च। पृथिवी प्रायः 60 घटिकायां निजाक्षं परितं एकं भ्रमणं करोति, अर्थात् पृथिव्या अक्षभ्रमणकालः हो. 23 निमेषाः. 56 पलं. 4.099 इति सिद्ध्यति।

ग्रहकक्षा स्वरूपम्–

**एवमाकाशगोलास्ते पवमानाख्याः ग्रहाश्रयाः।**
**अधोऽधः क्रमतो ज्ञेयाः शनेश्चन्द्रावधि स्थिताः॥**
**आदौ शनिर्गुरुस्तस्मात्ततो भौमस्ततो रविः।**
**ततः शुक्रो बुधस्तस्मात्ततदिन्दुरिति स्फुटम्॥**

इमे आकाशे स्थिताः सन्ति ते सर्वे प्रहनामवायुना सञ्चालिता भवन्ति। स्वस्वविमण्डलवृत्ते ग्रहाः अपि प्रवहवायुनैव प्रेरिताः भवन्ति। ग्रहाणां कक्षावृत्तानि प्राचीनाचार्याणां मतानुसारमेव भवन्ति यत् सर्वोपरि शनिकक्षा, तस्मादधो गुरुकक्षा, तस्मादधः अन्याः कक्षाः। क्रमेण कक्षाः इत्थं भवन्ति–

1. शनिः 2 गुरुः 3 भौमः 4. रविः 5 शुक्रः 6 बुधः 7. चन्द्रः 8 राहुः 9 केतुः।

**1. रविः**–सूर्यः आत्मा जगतस्तस्थुषश्च। रविरेकं नक्षत्रम्। नक्षत्रेभ्यः समीपतरस्थलात् पृथुलबिम्बवानस्माभिः दृश्यते। भूमेस्तस्य दूरं (93000000) खषट्काग्निगोमिता। नवपञ्चाशत्कला अष्टौ विकलाश्च 59 8 गच्छतीति यत् सैव रवेः दैनन्दिनी मध्या गतिः। सूर्यस्य प्रकाशः सार्द्धाष्टनिमेषसमये पृथ्वीं प्राप्नोति। रविकान्तौ सप्तकिरणा भवन्ति। रवेः गोलीयव्यासः 86400 परिमितः। रविः क्रान्तिवृत्ते भ्रमति।

**2. चन्द्रः**–आदित्याद्वै चन्द्रमा जायते। भुव एक उपग्रहः चन्द्रनाम्ना प्रसिद्धः। प्रत्यहं चन्द्रोदयदर्शनाच्चन्द्रस्य पूर्वाभिमुखगमनस्य प्रतीतिः स्वयमेव भवति। सूर्यरश्मिश्चन्द्रमा गन्धर्वः। चन्द्रः सूर्यस्य प्रकाशेन प्रकाशितः अतः चन्द्रस्य नाम सूर्यरश्मिरिति। भूमेर्दूरञ्च चन्द्रस्य 240000 परिमितं दूरम् भवति।

**3. बुधः**– यदा कदा सन्ध्याकाले दरीदृश्यते क्षितिजस्य समीपे प्रातः काले पूर्वदिशि, सायंकाले च पश्चिमदिशि। सूर्यस्य समीपतमो ग्रहो बुधः भवति। कक्षावृत्तं चास्य लघुतमम् वर्तते। अस्य परिक्रमणकालः 88 दिनानि भवन्ति। दीर्घवृत्ताकारकक्षा अस्य भवति। बुधचन्द्रयोः पर्याप्ता समानता विद्यते।

**4. शुक्रः**– अतिभासुरो ग्रहोऽयं दिवाऽपि कदाचिद् नेत्रगोचरतां याति। सामान्यतया

प्रातः काले पूर्वक्षितिजे, सायंकालेऽपरक्षितिजे लक्ष्यीक्रियते। भौमादिपञ्चग्रहेषु यथा शुक्रस्य ज्योतिः वर्तते तथाऽन्यस्य ग्रहस्य नास्ति। अत एव– शुक्रज्योतिश्च चित्रज्योतिश्च अतिभासुरत्वात् सान्ध्यप्रकाशे प्रभातवेलायां सायं वेलायां वा शुक्रावलोकनं सर्वोत्तमम्। शुक्रे वायुमण्डलं वर्तत इति निश्चितमेव।

**5. भौमः**:– बहिर्ग्रहाणामस्मत्समीपतमो भौमो रक्तवर्णत्वात् सरलतया नक्षत्राणां मध्येऽभिज्ञाने अस्य कलाः प्रायेण तु पूर्णाः सन्ति। यदि कदाचिच्च कलाहानिर्भवति, तथापि चन्द्रस्य शुक्लपक्षीयत्रयोदशकला इव कलाः दृश्यन्ते। भौमो निशायां सूर्यास्तात् सूर्योदयकालपर्यन्तमवलोक्यते। भौमे वायुमण्डलमस्ति, कदाचित्तत्र आम्लजनकं नास्ति, तत्र अङ्गारकाम्लं बाष्पं पर्याप्तमात्रया वर्तते। भौमे जलम् दुर्लभम्।

**6. गुरुः**:– बृहस्पतिः प्रथमञ्जायमानो तिष्यन्नक्षत्रमभिसम्बभूव अर्थात् बृहस्पतेः पुष्यनक्षत्रसमीपे जन्म अभूदिति। आकारे भारे च बृहत्तमो ग्रहः अतिभासुरश्च। ग्रहाणां मध्ये विशालतमस्यास्याक्षभ्रमणकालो न्यूनतमः। अस्य बिम्बे मेखला दरीदृश्यते। एकादशसंख्याकाश्चस्योपग्रहाः सन्ति। अत एव दूरदर्शकेऽस्याद्भुतं दर्शनम्। गुरुः सूर्यं परितः 4332. 6 दिनेषु (11.86) वर्षेषु वा परिभ्रमति। दीर्घवृत्ताकारा कक्षा। गुरौ वायुमण्डलं वर्तत इति निर्विवादम्। गुरोर्वायुमण्डले जलजनकबाष्पं बहुलतया वर्तते।

**7. शनिः**:– सुदूरवर्तित्वात् शनैः शनैश्चरति। आसुरग्रहाणां मध्ये शनैः शनैश्चरत्वं सर्वाधिकदूरत्वञ्च प्राचीनज्योतिर्विदां सुविदितः एवास्ताम्। सौरमण्डलेऽपूर्ववस्तुनि सन्ति। शनिः सूर्यं परितः 10759.2 दिनेषु 29 वर्षेषु वा परिभ्रमति। दीर्घवृत्ताकारा कक्षा। सूर्यादस्य दीर्घतमं दूरत्वं 93,63,88,000 क्रोशार्धानि। 10 होरा 14 क्षणमितोऽस्य कक्षाभ्रमणकालः पर्याप्तमल्पः। गुरुवदत्रापि वायुमण्डलं वर्तते। शनेर्नवोपग्रहाः सन्ति। एतेषु टाइटन् नामकः उपग्रहः सर्वाधिकप्रकाशमानाऽष्टमकोटिकनक्षत्रमिव भाति।

**निष्कर्षः**:–

सूर्यादेव सर्वे ग्रहाः जाता इति विदुषां सिद्धान्तः। भूमौ यत्रत्याक्षांशाः शून्याः तत्र रावणस्य राजधानी लङ्का वर्तते। भूपरिधिः (4967) योजनमिता तथा व्यासः (1581) योजनमितो भवति। नाडीवृत्तात् उत्तरभागे मेषादिषड्राशौ अहोरात्रवृत्तेषु सूर्यभ्रमणात् उत्तरगोलः, तथा नाडीवृत्तात् दक्षिणभागे तुलादिषड्राशीनामहोरात्रवृत्तेषु सूर्यभ्रमणात् दक्षिणगोलो भवति। मकरादिषड्राशीनामहोरात्रवृत्तेषु सूर्यभ्रमणात् उत्तरायणम्, कर्कादिषड्राशिषु सूर्यभ्रमणेन दक्षिणायनम्। मेषादिद्वादशराशयः भवन्ति। ग्रहाः– सूर्यः, चन्द्रः, भौमः, बुधः, बृहस्पतिः, शुक्रः, शनिः। भूच्छायायाः चन्द्रकक्षापर्यन्तस्य नाम राहुः, या भूच्छाया चन्द्रकक्षामतीत्य

सुदूरं बहिर्याति तस्याः नाम केतुः। अधुनातनासस्तु अरुण (यूरेनस्), वरुणः (नेप्च्यून), यमः (प्लुटो) अपि मन्यन्ते। भौमादयः (भौमबुधबृहस्पतिशुक्रशनयः) पञ्चताराग्रहाः। इष्टकालः सूर्योदयात् यातकालं सावनेष्टं प्रकीर्त्तितम्। अनया रीत्या ग्रहाणां स्वरूपं वैज्ञानिकरीत्या ज्योतिषशास्त्रे विद्वद्भिः वर्णितम् अस्ति। **प्रत्यक्षं ज्योतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ** इत्युक्तयः अत्र संगच्छति।

**सन्दर्भग्रन्थसूची-**


1. सूर्यसिद्धान्तः कपिलेश्वर शास्त्री, चौखम्भा संस्कृतसंस्थान वाराणसी।
2. मुहूर्तचिन्तामणि श्रीरामदैवज्ञविरचितं,चौखम्बा विद्याभवन वाराणसी।
3. मूहूर्तमार्तण्डः : दैवज्ञनारायण विरचितौ, चौखम्बा विद्याभवन वाराणसी।
4. होरारत्नम् : श्री मन्मिश्र बलभद्रमिश्र विरचितं, मोती लाल, बनारसीदास, दिल्ली।
5. बृहज्जातकम् : दैवज्ञवराहमिहिरविरचितः, ठाकुरप्रसाद एण्ड सन्स राजाघरवाला, वाराणसी।
6. नारद संहिता : महर्षि नारद विरचितम्, मोती लाल, बनारसीदास, दिल्ली।




 ISSN : 2349-6452

# मनोविश्लेषणसिद्धान्तः

-डॉ. मदनकुमारझा*

**शोधसारः**- गतशताब्द्याः उत्तरकाले एकेन विश्वविख्यातेन विज्ञानविदा योरोपभूखण्डे जन्म लेभे। महामना आसीत् सिग्मण्डफ्रायडमहोदयः। अनेन स्वविचारप्रचारैः कम्पिता इव कृता पृथ्वी, जनमानसे क्रान्तिरिव संचारिता। समाजव्यवस्थायां मानवसम्बन्धेन च आपातितः कश्चित् वैचारिकः संकटः, मानवमूल्यानां मान्यतानां च कृतं सर्वशः ....। संक्षेपतः, यद् यदासीत् पुरातनं चिरकालादायातं वा सर्वजनीनं स्वीकृतं सत्यं वा, तत् तत् सर्वं स्वतर्कैः अपाकृतं मथितं पूतिगतमिव नाङ्गीकारयोग्यम् इति साधितम्। कलौ युगे सः युगावतार इव जातः। अस्य प्रभाववशात् समाजे संस्कृतौ च, विज्ञाने मनोविज्ञाने च, धर्मे साहित्ये कलायां चापि नूतनः प्रकाशः अवतरितः, अभिनवः कोऽपि ऊर्जः संचरितः, अभूतपूर्वस्य अदृष्टपूर्वस्य च कस्यापि युगस्य अवतारो जातः। सिरमण्डफ्रायड आसीत् युगपुरूषः, इति स्वयं युग एवं स्वीकरोति।

## मनोविश्लेषणसिद्धान्तः (Psycho Analysis Theroty)

एनं सिद्धान्तं प्रसिद्धः मनोवैज्ञानिकः सिग्मण्डफ्राइडमहोदयः प्रत्यपीपदत् 1856 ईसवीयाब्दे मुरबियानामके स्थाने जनिं लेभानः। अयं यहूदः वियेनावास्तव्यः वैद्यः मनोरोगचिकित्साक्षेत्रे मनोविश्लेषणस्य तत्त्वमुपस्थापयामास। यद्यप्यद्यत्वे नैके मनोवैद्याः। तदीयानि तत्त्वानि नाङ्गीकुर्वन्ति तथापि एतत्क्षेत्रे तस्यावदानं नितरां महत्त्वपूर्णमित्यनस्वीकार्यं सत्यम्, अरिष्टाटल महोदयादनन्तरमयमेव पाश्चात्त्यविद्वान् मानवमनसः गहनाया गतेः अधिकं परिचयं प्रास्तौत्।

## मनोविलेषणवादस्य अर्थः (Meaning of Psychoanalysis)

व्यक्तित्वसिद्धान्तेषु अन्यतमः गुरुत्वपूर्णः सिद्धान्तश्च भवति मनोविश्लेषण-सिद्धान्तः। मनोविश्लेषणस्य एते त्रयः अर्थाः अधोनिर्दिष्टाः सन्ति-

---

* सहायकाचार्यः, शिक्षाशास्त्रविभागः, केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीरणवीरपरिसरः, कोट-भलवालः, जम्मूः।

1. **ब्राउन्** महोदयानुसारं– मनोविश्लेषणम् एकः प्रविधिः (ज्मबीदपुनम) वर्तते। येन माध्यमेन व्यक्तेः मानसिकजीवनस्य गत्यात्मक चेतनम् एवम् अचेतनस्य गवेषणं क्रियते।

in the first place, a technique, which attempts the dyanamic's of the unconscious and conscious mental life of the individual- Brown

2. **द्वितीयः अर्थः भवति**– मनोविश्लेषणं मनश्चिकित्सायाः (Psychotheropy) एका शाखा वर्तते। येन माध्यमेन स्नायुविकृतिः, मनोविकृतिः व्याधिनापीड़ितानां जनानाम् उपचारः क्रियते। अनेन उपचारेण व्यक्तिः स्वजीवनस्य समस्याभिः साकं समायोजनं विदधाति एवं सुखेन जीवनस्य निर्वाहं करोति।

Secondly a form of psychotherapy which attempts to restructure the neurotic or psychotic or perverse or psychopatic character so that he may make a better happier adjustment to his life's problem- Brown

3. **तृतीयः अर्थः वर्तते**– मनोविश्लेषणं मनोविज्ञानस्य सम्प्रत्ययः अथवा एका व्यवस्था वर्तते। अस्य इदं तात्पर्यं भवति यत् मनोविश्लेषणस्य उपयोगः समाजे केवलं असामान्यानाम् अथवा कुसमायोजितनां व्यक्तीनां कृते एव न भवति, अपि तु सुसमायोजितानां सामान्यव्यक्तीनां कृतेऽपि महान् उपयोगी भवतीति।

**According to Freud the Word Psychoanalysis implies the following meanings-**

Psychoanalysis is a school of psychology which emphasises the importance of early childhood experience and in the personality development.

Psychoanalysis is also a technique which explores the hidden emothons of psyche or unconscious mind.

Psychoanalysis is also a method, which treat nervous and behavior disorders or personality deviations.

**The important explorations of psychoanalysis according to Freud are-**

Concpets of unconsciousness of mind.

Dynamic aspects of mind.

Theory of libido and psycho-sexual genesis.

Theory of personality and abnormal behavior.

ऐतिहासिकक्रमेण तस्य मनोविज्ञानक्षेत्रे योगदानं नित्यं प्रस्तूयते-

**मूलप्रवृत्तयः (Instinct or Eors)**

मूलप्रवृत्तिः नाम काचित् जन्मजाता मनःशक्तिर्या मनुष्यस्य व्यवहारस्य सञ्चालनं दिशानिर्धारणञ्च करोति। यदि सर्वा मूलप्रवृत्तय एकत्र स्थाप्यन्ते तर्हि व्यक्तित्वस्य-पूर्णमानसिकशक्तेः समाना भविष्यन्ति, मूलप्रवृत्तौ इमे विषया भवन्ति। यथा-

1. **आधारः (Source)**- शारीरिकी आवश्यकता या प्राणिनि काञ्चित् स्थितिमुत्पादयितुं सहायिका भवति।

2. **उद्देश्यम् (Aim)**- उपस्थितां कायिकोत्तेजनामभावं च दूरीकरोति। यथा-क्षुधाया उद्देश्यं शरीरे पोषकतत्त्वानामभावस्य दूरीकरणं, तच्च भक्षणेन सम्भवति।

3. **पदार्थः (Object)**- आवश्यकतायाः पूर्तये पदार्थस्य व्यवहारस्य च पदार्थ इति व्यवहारः। बुभुक्षुणा बुभुक्षानिवारणाय याः क्रियाः सम्पाद्यन्ते ताः अस्योदाहरणम्।

4. **गतिशक्तिः (Impetus)**- मूलप्रवृत्तेः शक्तिः या आवश्यकतायाः प्राबल्येन निर्धार्यते, आवश्यकता यावती तीव्रा स्यात् गतिशक्तिस्तावती सबला भवति।

एवं मूलप्रवृत्तिः मानसिकसन्तुलनस्य संरक्षिका, मूलप्रवृत्तेः उद्देश्यं व्यक्तेः सन्तुलनस्य परिरक्षणम्, शारीरिकन्यूनतया सह अस्याः प्रारम्भः न्यूनतायाः पूर्त्या सा समाप्यते, इयं मूलप्रवृत्तिः वारं वारमुद्भवति।

**फ्रायडवर्यस्य मतेन प्राथमिक्यौ मूलप्रवृत्ती भवतः-**

1. जीवनमूलप्रवृत्तिः (Life Insticnt or Eros)

2. मरणमूलप्रवृत्तिः (Death Instinct or Thanatos)

जीवनमूलप्रवृत्तिः सा शक्तिः या व्यक्तिं जीवनाय, प्रजननाय, अन्येभ्यो रचनात्मककार्याय च प्रेरयति।

जैविकदृष्ट्या जीवनमूलप्रवृत्तेः प्रकाशः शरीरस्य रक्षायां, वर्धने च दृश्यते, मनोवैज्ञानिकदृष्ट्या भोजनं, भौतिकापद्भ्यः स्वस्य रक्षायै विधीयमानाः प्रयासाः, गृहनिर्माणं, वस्त्रनिर्माणमित्यादिकं सर्वमपि जीवनमूलप्रवृत्तेः प्रकाशः।

मृत्युमूलप्रवृत्तिरेषां विपरीतकर्मसु प्रकाशते। तन्नये "The goal of life is death"।

अतः अवश्यम्भाविनं मृत्युं लक्ष्यीकृत्य क्रियमाणाः प्रयासाः यथा आक्रमकव्यवहाराः, स्वस्य जनेश्च नाशनाय प्रयासाः, ध्वंसात्मकबौद्धिक क्रिया यथा- समालोचनव्यङ्ग्यादिकं सर्वं मृत्युमूलप्रवृत्ते प्रकाशः।

एते प्रवृत्ती सर्वदा परस्परं विरुद्धतयैव प्रकाशेते इति न, अपि तु एते सदैव समन्विते अपि तिष्ठतः। यथा- भोजनकर्मणि बुभुक्षानिवारणोद्यमः जीवनमूलप्रवृत्तिश्चेत् चर्वणनिगलनादिकं मृत्युमूलप्रवृत्तेः प्रकाशः। अस्मादेव कारणात् एकस्मिन्नेव द्रव्ये प्रीतिर्जुगुप्सा च जायते। अयं द्वैधीभावः उभयात्मकतेति (Ambivalence) निश्चीयते मनोविद्भिः।

यावद् जीवनमूलप्रवृत्तयः मृत्युमूलप्रवृत्तिभ्यः प्रबलाः भवन्ति तावत् रचनात्मकानि कार्याथ्ण मनुष्यः करोति। यदा मृत्युमूलप्रवृत्तयः प्रबलः स्युस्तदा ध्वंसात्मककार्याणि आचर्यन्ते नरैः।

**Psychoanalysis**

"Method for investigating the unconscious (1895). Through free association and dream analysis, the patient is encouraged to overcome resistances to verbalize all the conflictual material hither to repressed into the unconscious. In (1903), Freud began the task of systematizing and revising his theories in the Viennese Psychoanalytic Association. In 1909, G.S. Hall invited Freud to present his theories to the academic world (clark University Lectures.) Sears (1943) and others have investigated the theories from the standpoint of experimental psychoanalysis and thus have effected a closer relationship between Freud's views and scientific psychology than existed during earlier decades."

**उपसंहारः**- का आसीत् युगान्तकारिणी नवयुगप्रवर्त्तिका चास्य विचारणा? कीदृशी अस्य मनसः संकल्पना? किं चास्ति मनश्शरीरयोः सम्बन्धविषये अस्य उत्तरम्? किं चास्ति स्वास्थ्यलाभाय उपचारविधिर्वा? विस्तारभिया न बहुचर्चितम् अत्र उचितं भवेत्। संक्षेपतः, निम्नवद् अस्ति अस्य विचारसारः। "एकमपि मनः अनेकधा विभक्तमस्ति। विभक्तेषु एतेषु मनोऽङ्गेषु परस्परविरोधात् संघर्षाच्च उद्भवन्ति शतशः मनोविकाराः। तेषां च मिथः समायोजनेन उत्पद्यते मनसः स्वास्थ्यम्, सुखं च मानुष्यम्"। एभिः वाक्यैः नवयुगस्य प्रवर्त्तनं जातम्। एषः अस्ति फ्रायडसिद्धान्तस्य सारांशः, हृदयञ्चापि।

अस्ति मनः। अस्य द्वौ पक्षौ आकृतिगत्यात्मकौ। याभ्यां मानवस्य समग्रता परिभाषिता भवति। इदम्मनः व्यक्तित्वार्थमपि सम्पादयति तथा हि-

**सन्दर्भग्रन्थसूची-**


1. आधुनिक मापन एवं मूल्यांकन, गुप्ता एस.पी.इलाहाबाद, शारदा पुस्तक भवन 2001
2. बालमनोविज्ञान, योगेन्द्रजीत, आगरा, बिनोद पुस्तक मंदिर, 1985
3. भारद्वाज, दिनेश चन्द्रा, भारतीय शिक्षा की आधुनिक समस्यायें, आगरा, बिनोद पुस्तक मंदिर, 1964
4. **Bista Abharni,** Pragata Shiksha Manovijanan, Agra, Vinod Pustak mandir, 1998
5. **Buch, M.B,** A Survey of Research in Education, Published by N.C.E.R.T., New Delhi.
6. **Choube, Sarayu Prasad** Educational Psychology, Lakshmi Narayan Agrawal, Agra, 1983
7. Encyclopedia of the World Psychologists. (4Vols), kalia H.L. Singh, N.K., Rita Singh, Delhi Global vision publishing House, 2002
8. English Sanskrit Dictionary, Devanathan Ramanuja, Edited by; William M. Monier, New Delhi Neeta Prakashan, 2007




शिक्षामृतम्, वर्ष-2022, अंक-13 ISSN : 2349-6452

# तैत्तिरीयोपनिषदि समावर्तनभाषणेन प्रतिफलितायाः नीतिशिक्षायाः प्रासङ्गिकता

श्रीशशांकशेखरपात्रः *

**विषयसारः** णीञ्-प्रापणे नीधातोः क्तिन्प्रत्यये स्त्रीत्वे निष्पन्ना नीतिरिति शब्दस्यार्थ आचरणम्, औचित्यम्, शालीनतेति। नीयन्ते संलभन्ते उपायादय ऐहिकामुष्मिकार्थाः वा यया प्राप्ता स नीतिः। नीतिशिक्षा एका आचारसंहिता। या मानवानां कर्तव्याकर्तव्यविषये मार्गदर्शनं स्थिरीकरोति सा नीतिशिक्षा। मानवेन ग्रहीता शिक्षा यदा नैतिकतया सह युज्यते तदा सा शिक्षा मानवजीवने फलवती भवन्ति। नीतिशिक्षायाः विषयो वहुधा भवन्ति। तेष्वन्यतमाः विश्ववन्धुत्वम्, सदाचारणम् सत्संगतिः, परहिताय दानम्, अनुशासनमित्येते विषयाः। एते विषयाः संस्कृतसाहित्येषु वैदिकवाङ्मये छत्रे-छत्रे विद्यमानाः भवन्ति। यद्यपि मानवजीवने व्यापकार्थे शिक्षा खलु आजीवनगतिशीला एका प्रक्रिया तथापि औपचारिकशिक्षायां गार्हस्थाश्रमे प्रवेशात्प्राक् बाल्यावस्थायां गुरुमुखादधीता विद्या, यया उत्तरोत्तरं जीवनं सुमधुरं भवेत्। काण्डद्वयात्मके कर्मकाण्डे ज्ञानकाण्डे चेति वैदिकसाहित्ये ज्ञानकाण्डान्तर्गता उपनिषत्। या विद्या संसारमतिं विनाशयति, परब्रह्म प्रत्यगात्मानं गमयति, दुःखजन्मादेः कारणज्ञानमवसादयतीति सा उपनिषद्विद्या। उपनिषत्सु ऋषिकवीनां दार्शनिकचिन्ता वैज्ञानिकचिन्ता च प्रकाशिता। उपनिषत्सु मानवस्य संसारबीजस्य कारणमेवञ्च मुक्तेः कारणमालोचितमिति। उपनिषत्सु तैत्तिरीयोपनिषदन्यतमा। तैत्तिरीयोपनिषदि शिक्षासमापनात्परं गृहे प्रत्यावर्तनात्प्राक् शिक्षार्थीनं प्रति गुरुः मानवजीवनस्य सर्वोपकारकं हितकरं वाक्यमुपदिशति। निबन्धेऽस्मिन् व्यवहारिकजीवनस्य मूल्यबोधे **'तैत्तिरीयोपनिषदि समावर्तनभाषणेन प्रतिफलितायाः नीतिशिक्षायाः प्रासङ्गिकता'** इति शीर्षकः प्रस्तुयते।

**मूलपदानि वेदः**, *उपनिषत्, शिक्षा, आश्रमः, धर्मः, अर्थः, काम इत्यादीनि*

**उपोद्घातः** अखिलधर्मपरकं खलु वैदिकसाहित्यम्।[1] मन्त्रभागधेयेन ब्राह्मणभागधेयेन

* सहायकाध्यापकः, संस्कृतविभागः,
विद्यासागरविश्वविद्यालयस्य दूरशिक्षाविभागः, पश्चिमबङ्गः

1. वेदोऽखिलो धर्ममूलम्। म.स. 2.6।

वेदो द्विविधो भवति। ब्राह्मणोऽपि उपनिषदारण्यकभेदेन द्विधा विभज्यते। एवमेव एकैकस्य वेदस्य संहिताब्राह्मणारण्यकोपनिषदिति चतस्रः शाखाः प्राप्ताः। अनेन वेदस्य अन्तः अवसानभाग इत्यर्थे वेदान्त इति पदेन उपनिषदेव बोद्धव्या। सर्वप्रथमे मुण्डकोपनिषदि वेदान्त[1] इति शब्दप्रयोगः दृश्यते। उपनिषच्छब्दस्तु उपपूर्वकस्य निपूर्वकस्य विशरणगत्य-वसादनार्थकात् सदिति धातोः क्विपिति प्रत्यये उपनिषदिति जाता। उप इत्यस्यार्थः सामीप्यमिति। नि इत्यस्यार्थः निश्चयः। या विद्या संसारमतिं विनाशयति, परब्रह्म प्रत्यगात्मानं गमयति, दुःखजन्मादेः कारणज्ञानमवसादयतीति सा उपनिषद्विद्या। अस्याः नामान्तरं ब्रह्मविद्या इत्युच्यते बृहदारण्यकोपनिषदि।[2] मुक्तिकोपनिषदि कथितासु 108 संखकासु उपनिषत्सु शंकराचार्येण 10 संख्यकाः उपनिषदः प्रमाणिताः, यथोक्तं

**ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-तित्तिरः**
**ऐतरेयं च छान्दोग्यं बृहदारण्यकं दश।**

एतासु कृष्णयजुर्वेदस्य तैत्तिरीयशाखायारन्तर्गता तैत्तिरीयोपनिषत्। तत्र शीक्षाब्रह्मानन्द-भृगुनामधेयेन तिस्रः वल्लयः सन्ति। तैत्तिरीयोपनिषदि शिक्षावल्ल्यां स्वाध्यायानन्तरं गुरुः शिष्यं प्रति ब्रह्मचर्यानन्तरं गार्हस्थजीवनसम्बन्धीनि कर्माण्यनुशास्ति। तानि सम्यगालोच्य विश्लिष्य च **'तैत्तिरीयोपनिषदि समावर्तनभाषणेन प्रतिफलितायाः नीतिशिक्षायाः प्रासङ्गिकता'** इति शीर्षकः प्रस्तुयते।

**नीतिशिक्षा** णीञ्-प्रापणे (भ्वा.1049) नीधातोः क्तिन्प्रत्यये स्त्रीत्वे निष्पन्ना नीतिरिति शब्दस्यार्थ आचरणम्, निर्देशनम्, औचित्यम्, शालीनतेत्यादयः। नीयन्ते संलभन्ते उपायादय ऐहिकामुष्मिकार्थाः वा यया प्राप्ता सा नीतिः। शिक्षँ विद्योपादाने (भ्वा 0689) शिक्ष्-धातोः टापि शिक्षते उपादीयते विद्या यया सेति विग्रहे शिक्षेति पदं सिद्धति। नीतिसहिता शिक्षा नीतिशिक्षा। एका आचारसंहिता। या मनुष्याणां कर्तव्याकर्तव्यविषये मार्गदर्शनं स्थिरीकरोति सा नीतिशिक्षा। मनुष्येणाधीता शिक्षा यदा नैतिकतया सह युज्यते तदा सा शिक्षा मानवजीवने फलवती भवन्ति। नीतिशिक्षायाः विषयो वहुधा भवन्ति। तेष्वन्यतमाः विश्ववन्धुत्वं, सदाचरणं, सत्संगतिः, परहिताय दानं, सुरापानवर्जनम्, अनुशासनमित्येते विषयाः। एते विषयाः संस्कृतसाहित्येषु वैदिकवाङ्मये छत्रे-छत्रे विद्यमानाः भवन्ति। मानवजीवनस्य विकाशपर्वः छात्रावस्थायां सम्पाद्यते। G.W.Allport इति मनोविदमहोदयमते 'Values are centralized system of psycho-physical disposition capable of making a larger portion of environment

1. वेदान्तविज्ञानसुनिश्चितार्थाः। मु.उ. 2.6।
2. सेयं ब्रह्मविद्या उपनिषच्छब्दवाच्या। बृ.उ. 1.3.2।

functionally equivalent to the individual and generalizing in him appropriate type of adaptive and expressive behaviours.' शिक्षार्थी शिक्षार्थं विद्यालयं गच्छति किन्तु कति छात्राः श्रद्धापूर्वकं स्वकर्तव्यं पालयन्तीति विषयेऽस्मिन् चिन्तनं विधेयम्। प्रतिदिनं मानवः जन्मजरामरणानि पश्यति तथापि तस्य मनसि किमपि परिवर्त्तनं न जायते। फलतः प्रत्येकक्षेत्रे हिंसाद्वेषविवादयः परिलक्ष्यन्तेऽतो नैतिकमूल्यविषये चिन्ताभावना कर्त्तव्या।

विश्वेषु सर्वेषु भूतेषु मानवः सर्वोत्तमजीवः ज्ञानादन्यतरेभ्यः भूतेभ्यः। तर्हि प्रश्न उदेति प्राणीषु सर्वे मानवाः श्रेष्ठाः नवेत्याशङ्कायामुत्तरं यत्श्रुताध्ययनसम्पन्नः मानव उत्तमो न तु ज्ञानहीनमानवः। जन्मनः परं जीवः 'मा' इति शब्दं उच्चारयति। यस्यार्थः ज्ञानम्। यदा वयं सर्वे मातुर्कृते यत्नशीलो भवामि। तथा श्रेष्ठताप्राप्त्यर्थं मानवस्य ज्ञानं प्रति प्रयत्नमपि करणीयमिति। मानवजीवनाभ्युदयार्थं शिक्षाग्रहणमावश्यकमिति। ज्ञानं विना समाजे मानवस्य यथा स्थायित्वं तथा प्रसिद्धिरपि न सम्भवतीति। स्थायित्वं विना व्यक्तित्वविकाशोऽपि न प्रकाशयति। परिदृश्यमानजगति कस्यश्चिद्विषयस्य विकाशः, परिवर्तनं, नवोपलब्धिरित्येते विषयाः शिक्षया नवाङ्गिकेन उद्‌भाव्यन्ते। अधुना समाजे मानवानां मध्ये यथार्थज्ञानभावान्मुल्यवोधस्य द्वन्दः प्रकाश्यन्ते। मानवानामवनमनं प्रतिरोधयितुं मूल्यबोधस्य शिक्षा प्रवर्त्तते। ज्ञानाहरणं चतुर्भिः उपायैः सम्भवति। श्रीहर्षेण 'नैषधचरितम्' इति महाकाव्ये उक्तम्

**अधीतिबोधाचरण प्रचारणैः दशाश्चतस्त्रः प्रणयन्नुपाविभिः।**
**चतुर्दशत्वं कृतवान् कुतः स्वयं न वेद्मि विद्यासु चतुर्दशः स्वयम्।**[1]

1. अधीति– 'अधीतिरध्ययनं गुरुमुखात् श्रवणम्।'
2. बोधः– 'बोधः अर्थावगतिः।'
3. आचरणम्– 'आचरणं तदार्थानुष्ठानम्।'
4. प्रचारणम्– 'प्रचारणमध्यापनं शिष्येभ्यः प्रतिपादनम्।'

महाभाष्यकारेणापि पस्पशाह्निके विद्यायाः चतुर्विधप्रकारा उपायाः कथिता– 'चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति– आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहार-कालेनेति।'[2]

1. नै.च. 1.4।
2. म.पस्पशाह्निकम्

**आश्रमव्यवस्था** श्रमुँ तपसि खेदे च (दिवादि: 0101) श्रम्-धातो: "घञर्थे कविधानम्" इति वार्त्तिकनियमेन कप्रत्यये श्रमस्तत: आङ्उपसर्गमुपयुज्य आश्रम इति शब्दो निष्पद्यते। आ समन्तात् श्राम्यन्ति यत्र स आश्रम:। तप इत्यस्यार्थ: सन्ताप ऐश्वर्यञ्च। खेदार्थ: दैन्यम्। एवं यत्रेन्द्रियाणि संन्ताप्यन्ते, यत्र ऐश्वर्यमनुभूयते, यत्र समक्षं दैन्यं दर्श्यते, तच्चापि समन्तात्स आश्रम:। चतुराश्रमेषु वसन् जन: पुरुषार्थश्चतुष्टयं लब्धुं शक्नोतीति शास्त्रसिद्धान्त:। चतुराश्रमा: खलु ब्रह्मचर्याश्रम: गार्हस्थाश्रम: वानप्रस्थाश्रम: संन्यासाश्रमश्चेति। तदुक्तं बृहदारण्यकोपनिषदि 'स होवाच याज्ञवल्क्य: ब्रह्मचर्यं समाप्य गृही भवेत्। गृही भूत्वा वनी भवेत्। वनी प्रवजेत्।'[1] आश्रमचतुष्टयं विना जीवनस्य पूर्णता न सम्भवति।

वैदिकयुगे पञ्चवर्षादारभ्य विद्यारम्भसंस्कारात्प्राग्गृहे शिक्षाभ्यासो भवति। उपनयनसंस्कारादनन्तरं वेदाध्ययनस्याधिकारी भवेत्। अत: ब्राह्मणस्य अष्टममासे उपनयनं करणीयमिति। अत्र समयविषये वैमत्यं दृश्यते। मनुना उच्यते–

**गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।**
**गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विश:।।**[2]

एतद्व्यातिरिच्यापि ब्राह्मणस्य षोडशवर्षे, क्षत्रियस्य द्वाविंशतिवर्षे, वैश्यस्य चतुर्विंशतिवर्षे उपनयनं भवेत्।[3] उपनयनसंस्कारादनन्तरं ब्रह्मचर्याश्रमं धारयति। भारतीयविचारपरम्परानुसारं गार्हस्थाश्रमं विना अन्येषामाश्रमाणां व्यवस्था वनेषु सम्पाद्यन्ते। प्रायशोऽष्टवर्षादारभ्य चतुर्विंशतिपर्यन्तं ब्रह्मचर्याश्रमो भवति। छान्दोग्योपनिषदि दृश्यते द्वादशवत्सरवयसि श्वेतकेतु: द्वादशवत्सरपर्यन्तं गुरुगृहे अध्ययनमकरोत्। तदुक्तं 'स हि द्वादशवर्ष उपेत्य चतुर्विंशतिवर्ष: सर्वान् वेदान् अधीत्य महामना अनुष्ठानमानी स्तब्ध एयाय।' ब्रह्मचारी छात्र: नाम्ना अभिहित:। कारणं स गुरो: दोषं छादयति – 'छत्रं गुरोर्दोषाणामावरणम्। तच्छीलमस्येति छात्र:' इति शब्दकल्पद्रुम:। तैत्तिरीयोपनिषदि शिक्षावल्ल्यां तृतीयेऽनुवाके अधिविद्यनामके अङ्गिरूपविद्याया: अङ्गानि कथितानि – 'अन्तेवास्युत्तररूपम्। विद्या सन्धि:। प्रवचनं सन्धानम्। इत्यधिविद्यम्।'[4] ब्रह्मचारी गुरुगृहे तिष्ठति अत: तस्य नामान्तरम् 'अन्तेवासी'। ब्रह्मचर्याश्रमस्य परं गार्हस्थाश्रमे प्रवेशयति। गार्हस्थाश्रमे प्रवेष्टुं पञ्चविंशतिवर्षादूर्द्ध्वं वयोऽपेक्षते। गुरुं निकषा अध्ययनं समाप्य शिष्य: गुरुदक्षिणां दत्त्वा तस्यानुमत्यानुसारं गृहं प्रत्यागमनं करोति।

---

1. बृ.उ. 1.1.1।
2. म.स. 2.2.36।
3. म.स. 2.38।
4. तै.उ. 1.3।

**गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि।**
**उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्।।**[1]

गार्हस्थाश्रमे श्रुतिप्रतिपादितानि करणीयानि कर्माणि गुरुः वेदाध्ययनानन्तरं समवर्त्तनानुष्ठाने शिष्यमुपदिशन्ति। 'सत्यं वद। धर्मं चर। स्वाध्यान्मा प्रमदः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव।'[2] जीवने संस्कारस्तु मूलम्। संस्कारसमाहिते शुद्धचित्ते उपासनावृत्तिः जागरित्ता इति कथिता। उपासनावृत्त्युत्पादनाय कर्माणि विधेयानि। उपनिषदि जीवनपरिपालनार्थं कामनारहितनिष्कामकर्मणः विधानमुपदिष्टम्। तदुक्तमीशोपनिषदि

**कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे।।**[3]

निष्कामकर्मणा पापक्षयेण शुद्धचित्तवृत्तिः जाग्रता भवति, तया अमृतं विन्दते। गुरुः शिष्यं प्रत्युपदिशति सदेव यथार्थतत्त्वं सत्यं वा वक्तव्यम्। सत्यनिमित्तं सर्वं परिहरतु परन्तु कस्यापि निमित्तं सत्यं न त्यजतु 'सत्यधर्म एव सनातनो धर्मः सर्वत्राव्यत्ययात्।' धर्मः नियमेनानुशासनेन वा मनुष्यान् धारयति रक्षति चेति।

अतः स्पष्टं भवति यद्धर्मानुशासनेन यथा मानवस्य तथा समाजस्य कल्याणं भवति। विश्वस्यास्य धारकरूपेण धर्मः स्वीकृतः। धर्मकारणान्मनुष्यः पापाद्विरमति। यथा तैत्तिरीयारण्यके- "धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपजीवन्ति, धर्मेण पापमपनुदति, धर्मे सर्वं प्रतिष्ठितम्, तस्माद्धर्मं परमं वदन्ति। मनुष्यशरीरं क्षयशीलम्। शैशव-यौवन-वृद्धत्वादिसंयुक्तं शरीरं ज्वरादिवशात्कष्टं सहते, पुनः परिणामे वृद्धत्वं प्राप्य विनाशत्वं याति। तस्माद्गीतायां श्रीकृष्णोच्यते।

**देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति।।**[4]

शरीरं यथा न शाश्वतं तथैव धनवैभवमपि। शास्त्रे तस्माच्छरीरेण सह धनस्यापि नश्वरता प्रतिपादिता।[5] अतः नश्वरे जीवने तस्माद्धर्माचरणं कर्तव्यम्। धर्मचारी जनः केवलं समाजे जीवति। धर्मविहीनं येषां जीवनं चलति, तेषां जीवनं केवलं श्वसनकार्यार्थमेव।

1. म.स. 3.4।
2. तै.उ. 1.11।
3. ई.उ. 2।
4. भ.ग. 2.13।
5. प. 1.14।

वस्तुतः ते न जीवन्ति।[1] अतो धर्माचरणं कर्तव्यम्। भगवद्गीतायां स्वधर्मे निधनं श्रेयमिति।'[2] धर्मो द्विविधः श्रौतः स्मृतिश्चेति। श्रुतिविहितधर्मो यागादिः एवञ्च स्मृतिविहितो धर्मो मन्वादिप्रणीतानुशासनानि भवन्ति। मनुना धर्मस्य दशलक्षणमुच्यते–

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।**[3]

समाजेऽर्थस्य प्रभूतं गुरुत्वमस्ति। अर्थं विना समाजः न चलति। शुष्कात् वालुकात् यथा किमपि कार्यं न सिध्यति तथैव धनहीनस्यापि सर्वप्रयत्नः निरर्थकः। निर्धनस्य कीदृशी अवस्था भवति तद्विषये शुक्रनीतौ शुक्राचार्येणोच्यते निर्धनः जनः गुणवानपि तस्य पुत्र-स्त्री-परिवारजनाः तस्य समादरं न कुर्वन्ति। सर्वे त्वं परित्यजन्ति। अतः सदुपायेन तथा सत्साहसद्वारा धनोपार्जनं करणीयम्। तदुक्तं

**निर्धनस्त्यज्यते भार्यापुत्राद्यैः सगुणोऽप्यतः।**
**संसृतौ व्यवहाराय सारभूतं धनं स्मृतम्।।**[4]

गार्हस्थजीवने जनः स्वेषां विवाहरीत्या पत्नीं गृह्णाति। ऋतुमतीं पत्नीं गत्वा सर्वे तेषां रेतरूपं महत्तेजः एतस्यां स्त्रियां गर्भे प्रक्षिपन्ति। पत्युः शुक्रशोणिताभ्यां पत्नी गर्भवती भवति। जनः पुत्रं काम्यति। तदुक्तं

**पुदिति नरकस्याऽऽख्या दुःखञ्च नरकं विदुः।**
**पुत्तस्त्राणात्ततः पुत्रमिह इच्छन्ति परत्र च।।**[5]

गार्हस्थजीवने किञ्चित्कर्माणि सदैव करणीयानि तदेव कर्माणि पञ्चमहायज्ञा इति। पञ्चमहायज्ञस्तु ब्रह्मयज्ञः, पितृयज्ञः, भूतयज्ञः, नृयज्ञः, देवयज्ञश्चेति। ब्रह्मयज्ञस्तु अध्यापनम्, पितृयज्ञस्तु पितृतर्पणम्, देवयज्ञस्तु होमकर्म, भूतयज्ञस्तु बलिर्प्रदानं, नृयज्ञस्तु अतिथिपूजनम्।[6] पञ्चमहायज्ञसम्पादनेन पापक्षयो भवति। एवमेव गार्हस्थाश्रमजीवनं सुन्दरं भवतीत्युपदेशः गुरुः शिष्यमुपदिशति। पित्रोः परिपालनं रक्षणञ्चेति पुत्रकृते महत्कर्तव्यम्। शिशुः पित्रोः कारणात् पृथिव्याः अस्याः सौन्दर्यं पश्यति। अतोऽवगम्यते पितरौ अस्माकं प्रथमो गुरुः। तस्मात्पितरौ नावमन्तव्यौ। तदुच्यते–

---

1. प. 1.95।
2. भ.गी. 3.35।
3. म.स. 6.92।
4. शु.सा. 3.182।
5. शु.आ. 33।
6. अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
   होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्।। म.स. 3.70।

**यं मातापितरौ क्लेशं सहेते सम्भवे नृणाम्।**
**न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि।।**[1]

जन्मनः परं निर्मले मनसि ज्ञानवर्त्तिकां प्रज्वलयति गुरुः आचार्यो वा। महर्षि आपस्तम्बमते 'यस्माद्धर्ममाचिनोति स आचार्यः। तस्मै न द्रुह्येत्कदाचन। स हि विद्यतत्त्वं जनयति। तच्छ्रेष्ठांजन्म। शरीरमेव मातापितरौ जनयतः।' कायमनोवाचा आचार्यस्य मङ्गलं कुर्यादिति। यः सहसा गृहमागमिष्यति सोऽतिथिः। शास्त्रे उच्यते–

**एकरात्रस्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः।**
**अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते।।**[2]

शिष्टजनः यत्कर्म सम्पादयति तत्कर्म केवलमाचरणीयानि न त्वन्यानि। पितरौ प्रति, गुरुं प्रति, अतिथिं प्रति ईश्वरस्य प्रतिमूर्त्तिं स्मृत्वा श्रद्धाभक्तिपूर्वकं श्रद्धा करणीया। अन्यस्मै यदा किञ्चिद्यच्छसि तदा तच्छ्रद्धया दातव्यम्। भगवद्गीतायां श्रीकृष्णेनोक्तं

**यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते।**
**कर्म चैव तदर्थीयं सदित्येवाभिधीयते।।**

**अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्।**
**असदित्युच्यते पार्थ न च तत् प्रेत्य नो इह।।**[3]

अपि च एतदुक्तं तैत्तिरीयोपनिषदि 'श्रद्धया देयम्। अश्रद्धयाऽदेयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्।'[4]

कामनापूर्वकं दानं न करणीयम्। जीवने संशयविषये सिद्धान्तनिर्णये गुरुणा प्रदर्शितं मार्गं स्मर्तव्यमिति। एतदनुशासनं सदैव गुरुः शिष्यं, पितरौ सन्तानं सन्ततिं प्रत्युपदिशति। गुरुशिष्यपरम्परायामनुशासनमिदमद्यावध्यनुशास्तीति। अनुशासनेन यथा अस्माकं जीवनं तथा समाजजीवनं सम्यक् परिशीलितं भवति। अनेन समाजस्य सर्वेषां मनुष्याणां मध्ये संहतिर्साधिता भवति।

**समानी वः आकूतिः समाना हृदयानि वः।**
**समानमस्तु वो मनो यथा वः सुसहासति।।**[5]

---

1. म.स. 2.227।
2. म.स. 3.102।
3. भ.गी. 17.27-28।
4. पूवोक्तम्।
5. ऋ.स 10.191.4

**उपसंहृतिः** आश्रमव्यवस्थामनुपालयन्तो जनाः सर्वं मानवसमाजं परिपोषयन्ति। स्वयं सम्यग् स्मरन्ति अन्याञ्च स्मारयन्ति। एतान्यनुशासनानि मानवसमस्यानां समाधानं कुर्वन्ति। यापिसर्वस्यमानवजीवनस्य कार्यक्रमो योजनवद्धस्तथापि परिशीलितजीवनकृते सदैव सर्वकालेऽनुशासनप्रयोजनमपेक्षते। आधुनिककाले सर्वेषां प्रगतिशीलानां मनुष्याणां संस्कृताध्ययनमावश्यकम्। कारणं शिक्षा यदि समाजस्याङ्गी भवेत्तर्हि अङ्गं खलु संस्कृतभाषा। यदि शरीरान्मस्तकं च्छिन्नं भवेत्तर्हि मस्तकहीनशरीरं निरर्थकं तद्वत्संस्कृतशिक्षाहीनः समाजः कदापि न काम्यः। अत एतान्यनुशासनानि परिपालयितव्यानि। तदुक्तं 'एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम्। एवं चौतदुपास्यम्।'[1]

**सहायकग्रन्थाः**

1. उपनिषत्; सम्पा.अतुलचन्द्रसेनः, हरफप्रकाशनी, कोलकाता (1978)।
2. तैत्तिरीयोपनिषत्; अनु.स्वामिजुष्टानन्दः, उद्बोधनकार्यालयः, कलकाता, 2014 (प्रथमप्रकाशः)।
3. उपनिषत्; सम्पा.स्वामिलोकेश्वरानन्दः, आनन्दपावलिशार्स, कोलकाता, 2002 (प्रथमसंस्करणम्)।
4. उपनिषत्; गीताप्रेसः, गोरक्षपुरम्, 2014 (दशमपुनर्मुद्रणम्)।
5. वेदव्यासः, श्रीमद्भगवद्गीता, शांकरभाष्यसहिता; सम्पा. स्वामी वासुदेवानन्दः, उद्बोधनकार्यालयः, कलिकाता, 2016 (पुनर्मुद्रणम्)।



1. पूर्वोक्तम्।

# संस्कृतशिक्षायाः समस्याः उन्नयनोपायाश्च

-डॉ. एम्. दत्तात्रेय शर्मा*

**उपोद्घातः**

विश्वविद्यालयायोगेन प्रदत्तमेतत्त्रिभाषासूत्रं साम्प्रतिकयुगेऽपि प्रसिद्धं वर्तते। आयोगेन माध्यमरूपेणभारतीयभाषाणां परीक्षणक्रमे संस्कृतभाषायाः प्रस्तावस्योपस्थापनं प्रभावोत्पाद-करीत्या विहितम्। आयोगसदस्याः बहुजनसमर्थितायाः, प्राच्यायाः, महत्यायाः, परिष्कृता-याश्चैतस्याः भाषायाः प्रस्तावं हृदयग्राह्यमित्यङ्गीकृतवन्तः। हिन्दूनां विशिष्टमाकर्षणमन्तरा संस्कृतभाषा तस्याः हि व्याकरणम्, काव्यसाहित्यम्, विस्तृतं विविधञ्च वाङ्मयमन्यसां भाषाणामपेक्षया गुरुतरं साहित्यमित्यादिकारणात् मानवसंस्कृतेरुपासकान् भृशमाकर्षयतीति।

माध्यमिकशिक्षाऽऽयोगस्य भाषाणामध्ययनम् इति पञ्चमेऽध्याये सांस्कृतिकभाषेति प्रकरणे माध्यमिकशिक्षाऽऽयोगो माध्यमिकशिक्षायां संस्कृतभाषायाः स्थानस्य पक्षमुप-स्थापितवान्। आयोगमते संस्कृतभाषा हि विविधभाषाणां जननी वर्तते। अस्याः ज्ञानमनिवार्यं वर्तते। संस्कृताध्ययनाय प्रोत्साहनमावश्यकं वर्तत इति।

## विविधायोगेषु संस्कृतम्

**संस्कृतशिक्षाऽऽयोगः-**

भारतीयशिक्षायाः विकासं दृष्टुकामानां लोकानां प्रस्तावानुरूपं भारते संस्कृतशिक्षायाः कृते केन्द्रेषु प्रदेशेषु च संस्कृतसाहित्यसंस्थानां प्रवर्तनं जातम्। पाठशालासु, महाविद्यालयेषु विश्वविद्यालयेषु च संस्कृताध्ययनं प्रोत्साहयितुं छात्रवृत्तिरारब्धा। संस्कृतपाण्डुलिपीनां संरक्षणं प्रकाशनञ्च समारब्धा। संस्कृतशिक्षकाणां प्रशिक्षिणमाधुनिकरीत्या प्रारब्धम्। संस्कृतविदुषां सम्मानं प्राचलत्। संस्कृतपाठशालानामुपाधयः आधुनिकोपाधिसमः अभवन्। संस्कृतशिक्षकाणां प्राध्यापकानाञ्च वेतनादिकम् आधिनिकानां समकक्षमभवन्।

* सहायकाचार्यः, स्कूल ऑफ एजुकेशन, केन्द्रीयसंस्कृतविश्वविद्यालयः, तिरुपतिः

**शिक्षाऽऽयोगः-**

सविस्तृते शिक्षाऽऽयोगप्रतिवेदनस्य प्रारम्भे केनोपनिषदि मन्त्रमुद्धृत्याप्यायोगसदस्याः संस्कृतभाषां हि सांस्कृतिकभाषेतिरूपेण प्रतिपादितवन्तः। तस्याः कृते केवलं पञ्चदशपङ्क्तयो विलिखिताः वर्तन्ते। एतासु पङ्क्तिष्वपि संस्कृतस्य शिक्षणं सर्वथा निषिद्धमायोगेन। शिक्षाऽऽयोगस्य सद्यः पूर्वं भारतशासनेन घटितस्य संस्कृताऽऽयोगस्य संस्कृतविश्वविद्यालया-नामुद्घाटनप्रस्तावस्य विरोधः शिक्षाऽऽयोगप्रतिवेदने कृतो वर्तते।

**शिक्षायाः राष्ट्रियानीतिः-**

भारतीयभाषाणां विकासे संस्कृतभाषायाः विशिष्टं महत्त्वमनुलक्ष्य देशस्य सांस्कृतिकैक्यस्य कृते तस्याः अपूर्वं योगदानदृष्ट्या विद्यालयस्तरे विश्वविद्यालयेच स्तरे संस्कृताध्यापनसुविधाः व्यापकरूपेण प्रदेयाः। एतस्याः भाषायाः अध्यापनस्य नूतनविधीनां विकासः प्रोत्साहनीयः। स्नातकस्तरस्य प्रथमे द्वितीये च सोपाने निर्धारितायां पाठ्यचर्यायां, यत्र हि संस्कृतभाषायाः ज्ञानमुपयोगिनी वर्तते। तद्यथा-आधुनिकभारतीयभाषायाः, प्राचीनभारतीयेतिहासः, भारतीयाः विद्याः भारतीयं दर्शनञ्चेति-संस्कृताध्यापनस्य सम्भावना अन्वेषणीया।

**समस्याः**

1. **उद्योगावकाशः-** उद्योगचयनार्थं मार्गदर्शनं नास्ति। उद्योगार्थं उत्तमः पाठ्यक्रमः कः इति निश्चयः करणीयः। भाविजीवनकाले अनया वृत्या किमानुकूल्यं भवति? का वृत्तिः स्वस्य तथा समाजस्य हितायभवति? इत्यादिप्रश्नानां समाधानंपरिपक्वमनस्काः एवकुर्युः।

2. **भाषां प्रति अन्यभावः-** संस्कृताध्यापकानां अन्यथा गतिर्नास्ति इति धिया संस्कृताध्ययनं प्रचलति। अस्यां स्थितौ मानसिकरीत्या भाषया सह निबद्धाः न भवन्ति। अतः प्रायः ये भाषां प्रति आत्मीयतां प्रदर्शयन्ति ते खलु संस्कृताध्यापकाः। अन्ये तु भिन्नकारणैः संस्कृतक्षेत्रे संलग्नाः एव। अत्र वृत्तिसंतृप्तिः, योग्यता, क्षमता इत्यादीनां गणना अध्यापकैः नैव क्रियते। यतः मानसिकसंतृप्तिः मूलतः न भविष्यति। ईदृशः स्वभावः बहुधा संस्कृताध्यापकेषु दृश्यन्ते।

3. **प्राविधिकनैपुण्याभावः-** आभासीयपरिवेषकारणेन सह सामाञ्जस्य स्थापनम्, पाठ्यक्रमस्य प्रविधिना सह समन्वयः, मूलभूतांशानां कार्यज्ञानं भवेत्। आत्मविश्वासः, प्रयोगे कौशलञ्च स्यात्। छात्रप्रतिक्रियासम्पादनम्,

विश्लेषणात्मकप्रस्तुतीकरणम्, अनुभवसम्पादनम्, प्राक्तनप्रविधीनामुपयोगः, प्रशिक्षणस्य अभावः, परियोजनाभावः, योग्यताभावः, समयाभावः इत्येतेषुनैपुण्यं सम्पादनीयम्।

4. **असमर्थता**– प्रायः समाजेऽस्मिन् संस्कृताध्यापकः बहुषु रङ्गेषु असमर्थतामनुभवन्ति। न समर्थः इत्यनेन संस्कृतभाषामतिरिच्य अन्येषु रङ्गेषु अस्य गतिः न भवति। केवलं संस्कृतभाषयाः कालः यापितः भवति। परन्तु समाजस्य आह्वानानि भिन्नानि तदनुसारं कश्चन संस्कृताध्यापकः तद्रीत्या चिन्तनं कुर्यात्। अधुना न दृश्यते।

5. **जीविकोपार्जनम्**– प्रायः संस्कृताध्ययनं कृत्वा शिक्षिताः भवन्ति संस्कृतच्छात्राः। अतः विद्यमानेषु अवकाशेषु अध्यापकत्वम् अधिकतया दृश्यते। अत्रापि अन्यागतिः नास्तीति छात्राः बहुसंख्याकाः प्रतिवर्षम् अध्यापकवृत्तौ प्रविशन्ति। परं तत्र पर्याप्तोपार्जनं न दृश्यते। तत्र कारणं भवति असर्वकारीयोद्योगः, अंशकालिकोद्योगः, अनुवादाभावः, मर्यादाराहित्यम् इत्यादि। अतः प्रायः छात्राः जीवकोपर्जानाय संस्कृतं पठन्ति परंस्वेच्छयाभवेत्।

6. **विभिन्नापवादाः**– इदं सुविदितं यत् संस्कृतभाषायाः पठनेन मन्दिरे उत प्रयोगादि कार्येषु एव तस्य उपादेयता वर्धते इति सामान्यापवादः दृश्यते। लोके अधुनाऽपि इदंलोकं न जानाति यत् संस्कृतं पठित्वा विभिन्नरङ्गेषु भिन्नावश्यकताः सन्तीति।

7. **संस्कृतानुसन्धानम्**– अनुसन्धानं नाम गवेषणम् अन्वेषणञ्च। उच्चस्तरे अनुसन्धानस्य प्रामाणिकता अधिका वर्तते। विशिष्टसंस्कृतानुसन्धानं नाम सामान्यं नास्ति अत्र सर्वथा इतिहास–पुराण–वेदादीनाम् इत्थम् अध्ययनं दृश्यते। अनुसन्धाने वैदुष्यं दर्शनीयम्। अनुसन्धानस्य प्रधानोद्देश्यं तु समाजस्य हितमेव। अनुसन्धानं अनुसन्धानस्य रीतिः क्रियान्वयश्च परिवर्तनीयः एव। अनुसन्धानस्य योगदानम् अस्माकं सर्वेषां कृते अधिकं वर्तते।

8. **प्रचार-प्रसारणम्**– आधुनिककाले प्रचार–प्रसारणयोः प्रमुखं स्थानं विद्यते। प्रचार–प्रसारणेषु नैकविधोपकरणानि उपलभ्यन्ते। ततश्च विषयस्य संस्कृतभाषया यावत् प्रसारः प्रचारः न भवति तावत् विश्वं ज्ञातुं न प्रभवति। केचन प्राविधिकनिपुणाः भवन्ति ये संस्कृतज्ञाः भूत्वा प्रसारप्रचारमपि अन्तर्जालीयमाध्यमेन कुर्वन्ति। परम् अन्येषां गतिः अत्र नास्ति चेत् कार्यपरिणामस्य व्यापकता बहु अल्पा भवति।

9. **विभिन्नसंस्कृतकार्यक्रमाः**– संस्कृतकार्यक्रमाणां उपादेयता, प्रयोगः, क्रियान्वयः समसामयिकसमाजः इति बहूनां तत्त्वानां सहकारेण करणीयाः भवन्ति। परन्तु अद्यतनकाले संस्कृतज्ञानां बहुधा मेलनम् अपि दृश्यते। परन्तु तत्र उपादेयतायाः संशयः एव। संस्कृतकार्यक्रमाणामुपरि अस्माकं दृष्टिः उपर्युक्तकारकाणि आधृत्य भवेत्। एवं संस्कृतकार्यक्रमाः विभिन्नस्तरेषु, विभिन्नक्षेत्रेषु, विभिन्नरीत्या करणीयानि भवति। परम् अस्य विद्यमानत्वं अस्मिन्काले नैव दृश्यते। कार्यक्रमाः बहुधा-जायमानाः सन्ति परं तस्य पृष्ठे उपादेयता, सार्थकता च इत्यस्माभिः अवधेयम्।

10. **विदेशे संस्कृतशिक्षा**– देशविदेशेषु संस्कृतशिक्षायाः प्रचार-प्रसारः अत्यधिकः दृश्यते। अत्र भूत्वा जनाः भारतीयसंस्कृतिं सभ्यताञ्च सम्यक् अनुपालयन्ति। तेषांकृते अस्माकं संस्कृतिः आत्मीयभावंजनयति। तथैव सवपरम्पराम् अनुवर्तयितुं इच्छन्ति। अतः विदेशीयानां भावना, तत्परता, रुचिः, अध्ययनशैली च भिन्ना दृश्यते। भाषायाः सर्वान्पक्षान् विदेशीयाः सुष्ठु अध्ययनाय निरताःसन्ति। परं तादृशः स्वभावः तादृशी दृष्टिः अस्मासु विरलतया दृश्यते।

11. **जनसञ्चारमाध्यमाः**– सञ्चारमाध्यमः इत्यनेन सामूहिकार्थः स्वीकर्त्तव्यः अर्थात् Twitter, Facebook, Whatsapp, Websites, Telegram, e-mail, e-resources एतेषां सर्वेषां सम्मिश्रणम् इति स्वीकर्तुं शक्यते। अतः संस्कृतकार्यक्रमाः, वार्ताः, सन्मेलनानि, अद्यतनीयाः विषयाः सर्वेऽपि अत्र स्थापनीयाः अनेन प्रचारणीयाः च। अतः संस्कृतशिक्षकाः अवश्यम् अस्मिन् अंशे अद्यस्काः भवेयुः।

12. **संस्कृतशिक्षकप्रशिक्षणम्**– शिक्षकप्रशिक्षणं संस्कृतभाषायाः मूलभूतं तत्त्वं भवति। शिक्षकाः भाविसंस्कृतच्छात्राणां निर्मातारः। अतः संस्कृतशिक्षकप्रशिक्षणं शिक्षकानां कृते केवलं अध्ययन-अध्यापनविधीनाम् एव पाठनमकृत्वा समसामयिकविषयाणां योजनं भवेत्। तेन शिक्षकप्रशिक्षणं सार्थकं भवति। एवमेव योग्यशिक्षकाणां निर्माणं भवति।

13. **अनुदानम्**– सामान्यतया समाजस्य उन्नयनम् अनुसन्धानपरिणामैःजायते। अतः अनुसन्धानेअधिकाधिकसमयस्य व्ययः कर्तव्यः। अनुसन्धानस्य विषयाः सदुपयुक्तविषयाः भवेयुः। एतदर्थं पर्याप्तानुदानं सर्वकारपक्षतः भवेत्। अस्माकं दौर्भाग्यं यत् अनुसन्धानविषयचयनादारभ्य निष्कर्षं यावत् किं कथं कर्तव्यमिति अजानन्तःकार्यं कुर्वाणाः सन्ति।

14. **संस्कृतविश्वविद्यालयानां भूमिका**– उच्चस्तरे संस्कृतविश्वविद्यालयाः अधुना

विकासमानाः यद्यपि दृश्यन्ते तथापि इति कर्तव्यानि बहूनि सन्ति। तेषु छात्रसंख्या, उद्योगावकाशाः, अनुदानं, विश्वस्तरे संस्कृतस्य उपस्थापनम् इति बहूनि सन्ति। विश्वस्तरे अस्याः भाषायाः वास्तविकोपादेयता उपस्थापयितुं विश्वविद्यालयानां भूमिका अधिका वर्तते। सर्वथा विश्वविद्यालयस्य व्याप्तिः अधिका अस्ति। अतः अस्माभिः संस्कृतविश्वविद्यालयानां सक्रियतायाः उन्नयनं कर्त्तव्यम्। सम्प्रति सर्वाणि कार्याणि प्रचाल्यमानानि सन्ति। तानि सर्वाणि पर्याप्तानि न। अत्र पठित्वा कः लाभः? इति प्रत्येकं छात्रः अवश्यं चिन्तयति। एवमेव सामान्यविश्वविद्यालयैः सह संस्कृतविश्वविद्यालयानां समानता प्रदर्शयितुं न शक्या। अतः विभिन्नोपायैः संस्कृतविश्वविद्यालयेषु सक्रियता आनेतव्या।

15. **संस्कृतशिक्षया सार्वत्रिकीकरणम्**– अस्माभिः बहुधा कथ्यते यत् भारतीयसंस्कृतेः प्रतीकरूपा सर्वासां भाषाणां जननी पोषणी च संस्कृतभाषा एव इति। किञ्च भारतीयपरम्परायाः प्रणाल्याश्च विविधमहत्त्वपूर्णाः अंशाः सन्ति ये अत्यन्तं साम्प्रतिकसमाजे उपयुक्ताः वैज्ञानिकत्वं च आप्नुवन्ति। अतः अस्माभिः विश्वस्तरे संस्कृतस्य उपस्थापनाय विभिन्नप्रयासाः अवश्यमेव कर्तव्याः।

16. **संस्कृतशिक्षायाः अपवादाः**– इयं भाषा एकवर्गीयभाषा, एकस्याः जातेः भाषा इति महान्प्रचारः दृश्यते। तत्र नैकाः संस्थाः वैज्ञानिकाः अपवादं निरूपयितुं बहुधा प्रयतमानाः सन्ति। अस्माभिः संस्कृतज्ञैः अस्य गम्भीरताम् अवगम्य अस्यां दिशि कार्यं कर्त्तव्यम्। इयं भाषा मृतभाषा इत्यपि बहुधा श्रूयते। पञ्चकोट्यधिकजनाः केवलं भारतवर्षे अधुना भाषमानाः सन्ति। अतः अत्रापि अस्माभिः अवधानं देयम्। एवमेव मन्त्रपूजादिषु अस्याः उपयोगः क्रियते इत्यपि अपवादः श्रूयते। अतः एतेषु विषयेषु अस्माभिः अधिकम् अवधानं देयम्।

17. **व्यापकता**– चत्वारः वेदाः, षडङ्गानि, श्रुतिस्मृतिपुराणानामिति कृत्वा अस्माकं प्राचीनवाङ्मयस्य विभागः अस्माभिः कृतः। तर्हि केवलं संस्कृताध्ययनम् इत्युक्तौ भाषायाः वेदाङ्गस्य वेदस्य पठनमेव न। अपि तु यथावश्यकतां यथासमयं यथासमाजं तदनुसारं तस्याः एव भाषायाः बहिरानयनं प्रदर्शनं वा अस्माभिः कर्त्तव्यम् यत्तु आधुनिककाले नैव दृश्यते। अतः अस्मिन्नपि मार्गे प्रयासः कर्तव्यः।

**उपायाः**

1. संस्कृतजगति अधिकाधिकाः उद्योगाः केवलं अध्यापने एव इति महान्प्रचारः एतावता जातः। भारतीयज्ञानपरम्परा दृष्ट्या असंख्याकाः उद्योगावसराः उपलभ्यन्ते। छात्रैः प्रथमम् अध्ययनक्षेत्रस्य निर्देशः कर्त्तव्यः। ततः यदि उद्योगावकाशाः नोपलभ्यन्ते तर्हि स्वयं अवकाशस्य रचना कर्त्तव्या। "वयम् अर्जयामः अन्यान् योजयामः" इति खलु संकल्पः भवेत्। तत्रापि प्राविधिकदृष्ट्या अवकाशाः अधिकाः। बहुविकल्पीया-धिगमेषु अस्माकं प्रवृत्तिः स्यात्। एतेन संस्कृतेन सह अन्यस्याः उपाधेः अवकाशप्राप्तिः भविष्यति। उद्योगवसराणां व्याप्तिः अधिका दृश्यते। NEP 2020 अपि अमुं सिद्धान्तं पालयति। येषुक्षेत्रेषु अवकाशः एव नास्ति तादृशेषु अपि अवकाशस्य प्रतीक्षामकृत्वा अवकाशस्य सृष्टिः अस्माभिः कर्तव्या। अतः सर्वकारं प्रति स्वदुःखं प्रदर्श्य आक्षेपः न कर्तव्यः। संस्कृतजगति अपि आत्मनिर्भरः संस्कृतज्ञः भवेत्।

2. पुरा प्रशिक्षणं नाम प्रतिदिनम् अध्ययनम्, अध्यापनम्, अभ्यासः, विचारः, चिन्तनम् इत्यादि। परम् अधुना शिक्षकप्रशिक्षणं केवलं विषयाधारितं न विषयस्तु अङ्गभूतत्वेन तिष्ठति। तर्हि किं प्रधानं इत्युक्तौ शिक्षकस्य समग्रविकासः प्रधानः। अर्थात् गुणाधारितशिक्षकप्रशिक्षणम्। अत्र मूल्याङ्कनं प्रत्येकं अंशस्य भवेत् न तु समग्रस्य इति विशेषः। अत्र शिक्षकाणां नैतिकमल्यप्रवर्धनम्, अधिगमप्रणाल्याः अवगमः, स्वव्यक्तित्वविकासः, सम्भाषणपद्धतिः, भाषा-देशयोः उपरि गौरवम् इति उभयोः प्रति स्वदायित्वस्याभिज्ञानं, समसामयिकविषायाणामुपरि अवगाहनम् अभिज्ञानञ्च। प्राविधिकक्षेत्रे नैपुण्यं सुप्रशिक्षितः संस्कृताध्यापकः। बहुभाषाभाषी अयंसुप्रशिक्षितः संस्कृताध्यापकः उपर्युक्तानांसर्वेषांगुणानां सम्मेलनेन कश्चन उत्तमशिक्षकप्रशिक्षणकार्यक्रमस्य समुद्भवः भवेत्।

3. संस्कृताध्यापकः भाषां प्रति न्यूनभावनां न अनुभवेत्। तत्र इयं भावना प्रत्येकं संस्कृताध्यापके भवेत्। न्यूनवेतनं, स्वेन कृतस्य कार्यस्य प्रोत्साहनं, अन्यभाषायाः औन्नत्यं, समाजे संस्कृतभाषायाः स्थितिः इत्येतान् सर्वान् अवगम्य परिपक्वः सन् संस्कृतशिक्षकः सगर्वेण कार्यं कुर्यात्। अतः संस्कृताध्यापकाय स्वसकारात्मकपरिवेशः स्वयं कल्पनीयः। स्वयं स्वस्योन्नतिः द्रष्टव्या। अनेन कालक्रमेण समाजः अपि स्वीकरिष्यति इति दृढविश्वासः भवेत्। अतः वयं सर्वेऽपि तन्निमित्तं निमित्तमात्रं भूत्वा कार्यं कुर्मः।

4. संस्कृतज्ञाः आधुनिकपरम्परां त्यक्त्वा अग्रे गन्तुं कदाचित् क्लेषम् अनुभवन्ति। आधुनिकप्रविधीनां संस्पर्शः अस्मासु अवश्यमेव स्यात्। एतेन अर्वाचीनविषयेषु गतिः भवति। कक्ष्या-शिक्षणे संस्कृताध्यापकः छात्रान् आकर्षयितुं एकमुत्तमं साधनं भवेत्। प्राविधिकज्ञानं विना कुत्रापि कस्यापि समुचितगतिः न भविष्यति। प्रत्येकं भाषाशिक्षकः अमुं विषयं अवगच्छेत्। एवं तस्मिन् कर्मणि संलग्नः भवेत्। शिक्षणे अभिरुचिसम्पादनाय, सरलाध्यापनाय, शिक्षणं रुचिपूर्णं कर्तुंच प्राविधिकज्ञानं प्रधानं भवति।

5. संस्कृतशिक्षकः प्रथमतया शुद्धभाषाम् अधिगच्छेत्। तेन सह समुचितसम्प्रेषणं तस्मिन् स्यात्। छात्राकर्षित-व्यक्तित्वमपि सम्पादयेत्। एतेनअसमर्थता कालक्रमेण अपगता भवति। अतः अत्र अभ्यासः, अभिप्रेरणं, अनुभवः, अनुकरणं प्रवृत्तिः इति बहूनां कारकाणां समावेशः भवति।

6. यथोक्तं संस्कृतभाषायाः उपरि अपवादाः नैके सन्ति। तस्य परिहारः निष्कासनञ्च अस्माकं प्रथमं कर्तव्यं भवति। यदा यदा संस्कृतार्थं प्रसारं कुर्मः, अस्माकं मनसि एतान् विषयान् विशेषतया उपस्थाप्य कुर्मः। तेन एकस्मिन् कर्मणि अनेकानि प्रयोजनानि सिद्ध्यन्ति। एवमेव संस्कृतसम्मेलनेषु, संङ्गोष्टीषु, कार्यशालासु यावच्छक्यंबाह्यानाम् आह्वानम् इति कश्चन संप्रदायः कल्पनीयः। एतेन संस्कृतक्षेत्रे जायमानानां विकासानां परिज्ञानम् अन्येषां भवति। तथा च जनसञ्चारमाध्यमानाम् उपकारः अस्माभिः स्वीकर्त्तव्यः। तेन संस्कृतस्य व्यापकता अधिका भवति।

7. अद्यतन समाजः यत्र नैके संस्कृतविश्वविद्यालयाः, महाविद्यालयाः, संस्थाः च सन्ति, न कुत्रापि एकवर्गाय अवकाशः दृश्यते। तथैव परम्परानुगुणं प्रयोगकर्मणि संलग्नाः पुरुषाः मौखिकपद्धत्या संस्कृताध्ययनं कुर्वन्तः सन्ति। यत्र अयमपवादः न तिष्ठत्येव। यतः सर्ववर्गीयाः छात्राः अद्यतनकाले संस्कृतपठनाय इच्छुकाः अवकाशं प्राप्य अग्रेसराः दृश्यते। तथैव एकस्मिन्कुले संभूतः एव संस्कृतं पठिष्यति इति कश्चनकालः नासीदेव।

8. अनुसन्धानस्य अर्थः प्रयोजनञ्च ज्ञात्वा संस्कृतच्छात्राः गवेषणकर्मणि प्रवर्तयेयुः। समाजस्य हिताय संस्कृतभाषायाः अज्ञातपक्षान् समाजाय दातुम् अस्माभिः गवेषणस्य स्थानं प्रमुखतया दत्तम्। अतः गवेषणस्य प्रणाली पद्धतिश्च अद्यतनकाले विज्ञानस्वरूपा भवेत्। गवेषणं संस्कृतच्छात्राणां बुद्धितीक्ष्णता, चिन्तनाशक्तिः, वास्तविकबुद्धिः, सर्जनात्मकता, काल्पनिकशक्तिः, विश्लेषणात्मकबुद्धिः इत्येतेषां सर्वेषां प्रतीकरूपा भवेत्। अनेन गवेषणस्य वास्तविकं प्रयोजनं सिध्यति।

9. संस्कृतभाषायाः स्थानं वैशिष्ट्यं न अस्माभिः प्रतिदिनं श्रूयते ज्ञायते च। अतः न केवलमस्माभिः सम्पूर्णविश्वेन अस्याः भाषायाः महत्त्वं ज्ञातव्यम्। अतः प्रसारमाध्यमानां बहुभाषाणां उपयुक्ता अस्मिन्सन्दर्भे आलोचनं कर्तं शक्यते। एवं अद्यतनयुगे प्रचारमाध्यमः तथा क्लिष्टकराः न सन्ति। यतः जनसञ्चार-माध्यमाः अन्तर्जालाधारिताः सुलभाः न अतिक्लिष्टाः च सन्ति। अतः तेषां प्रयोगे अस्माकं नैपुण्यम् अस्माभिरेव सम्पादनीयम्। Whatsapp, Facebook, Twitter इत्यादिषु वयं संस्कृतज्ञाः सक्रियाः भूत्वा प्रत्येकं लघु-लघु विकासमपि अन्तर्जालद्वारा समाजाय दर्शयिष्यामः। अतः प्रत्येकं सोपानं जनसञ्चारा-धारितमाध्यमेन प्रसारः स्यात्। प्रचारः तेनैव आगामिनीकाले संस्कृतच्छात्राणां भविष्यत्सुरक्षितं भवति। अतः जनसञ्चारमाध्यमानाम् उपयोगः अस्माभिः अवश्यं कर्तव्यः भवति। अत्र न कदापि न्यूनभावना प्रदर्शनीया।

10. संस्कृतज्ञानां दृष्टिः क्रियान्वयनं च सर्वथा परम्पराधारिता भवति। तेन पारम्परिकजनानाम् आकर्षणं क्रियान्वयनं च भवत्येव। परन्तु आधुनिकानाम् अन्यक्षेत्रीयानामपि का गतिः? प्रत्येकं कार्यक्रमस्य संयोजनं नूतनप्रकल्पनैः नूतनैः सह करणीयं भवति। कार्यक्रमाणाम् उद्देश्यं प्रयोजनञ्च सुष्टु अभिज्ञातं भवेत्।

11. वैदेशिकाः देशं त्यक्त्वा दूरे तिष्ठन्ति इत्यतः तेषां संस्कृतविषये अभिमानः अत्यधिकः भवति। भारतीयसंस्कृतेः सभ्यतायाश्च विषयेपठितुं ज्ञातुं इच्छन्तः ते अधिकं श्रमं कृत्वा संस्कृतिम् अनुसर्तुं प्रयत्नं कुर्वन्ति। भारतीयाः प्रायः श्रद्धालवः एव भवति। तथापि कुत्रचित् अद्यतनकाले लोपः दृश्यते। अनयोः प्राच्य-पाश्चत्ययोः सङ्गमः तदातदा भवेत् येन उभयोः मध्ये सेतुबन्धनं भवति। अनेन अस्माभिः न केवलं भारते अपितु सम्पूर्णविश्वे संस्कृतजागरणम् अधिकतया भविष्यति।

१ प्रत्येकं संस्कृतसम्मेलनेषु गोष्ठीषु चवैदेशिकपण्डितानाम् आह्वानं संयोजनं वा अवश्यं भवेत्। अनेन वैश्विकस्तरे संस्कृतस्य प्रचार-प्रसारणं सुतरां भविष्यति। वैश्विकसम्मेलनेषु संस्कृतज्ञानां भागग्रहणम् अत्यधिकप्रोत्साहनप्रदानं भवति। एवमेव वैश्विकपरिप्रेक्ष्ये संस्कृतस्य योगदानं कथं स्यात् इत्येतादृशानाम् उपरि लेखनं प्रस्तुतीकरणं वा भवेत्। एतदर्थम् अस्माभिः प्रोत्साहनं कर्त्तव्यम्।

12. संस्कृतज्ञैः सर्वैरपि अनुवादावकाशाः अवसराश्च प्राप्तव्याः। एतदर्थं बह्व्याः संस्थाः बहुविधकार्याणि कुर्वन्ति। विश्वविद्यालयानुदानायोगात् अस्माभिः

सर्वविधानुदानं प्राप्यते। परन्तु संस्कृतज्ञैः इदमवश्यं चिन्तनीयं यत् विभिन्नक्षेत्रेषु भिन्न-भिन्नसंस्थाः कार्याणि कारयितुं अनुदानानि यच्छन्ति। तस्य सदुपयोगः संस्कृतज्ञैः कर्तव्यः।

13. प्रपञ्चेऽस्मिन् बहुविधसमस्याः सन्ति सामाजिकं व्यावसायिकम् इत्यादि च। संस्कृते वैज्ञानिकता अस्तीति कथनमेव नअपितु विश्वसमस्यानां समाधाने संस्कृतस्य महद्योगदानमस्तीतिनिरुपणीयम्।

14. संस्कृतवाङ्मयस्य व्यापकतायाः मापनं कर्तुं नैव शक्यते। संस्कृतस्यप्रभावः तदेव सार्थकतांयाति यदा संस्कृतज्ञाः संस्कृतविषयान् अन्तर्वैषयिकदृष्ट्या अध्ययनमध्यापनञ्च करिष्यन्ति। तथैव विभिन्नसंस्कृतीभ्यः सभ्यताभ्यश्च भारतीयसंस्कृतेः तौलनिकं समकालिकमध्ययनं करिष्यन्ति। एतेन संस्कृतस्य व्यापकता अत्यधिका भविष्यति।

### उपसंहारः

दैवीभाषा, मधुरभाषा इत्यादीनि नामानि संस्कृतस्य महत्त्वं सूच्यन्ते। किन्तु आधुनिककाले संस्कृतशिक्षाविषये अनुभूयमानाः काश्चन समस्याः मया चर्चिताः। पुनः संस्कृतस्य वैभवं सर्वत्र व्यापृता भवेत्। तर्हि विद्यमानाः समस्याः समाधानाय संस्कृतवर्धनाय केचन परिष्काराः अपि मया प्रस्तुताः। अनेन संस्कृतस्य भारतस्यापि च उन्नयनं भवति।

### परिशीलितग्रन्थसूची

1. संस्कृतशिक्षण- डॉ. रघुनाथ सफाया, हरियाणासाहित्य अकादमी, चण्डीगढ, 1990.

2. Teaching and Developmentof Sanskrit - S.R. Sharma, Anmol Publications Pvt. Ltd.



# संस्कृतज्ञाने शिक्षणक्षमताया विकासः प्रभावश्च

शुभश्रीदाशः *

**उपोद्घातः (Introduction)**

व्यक्तिः स्वानुभवेन प्रतिक्षणं किमपि शिक्षते एव शिक्षया व्यक्तिव्यवहारेषु परिवर्तनं दृश्यते। परिवर्त्तनमिदं यदि कक्ष्याशिक्षणेन आधारितं चेत् शिक्षणेनाभिप्रेरितं भवति। शिक्षणद्वारा ज्ञानविकासः जायते। तदघिगम एव उपलब्धिः। उपोपसर्गात् डुलभष् प्राप्तौ इति धातोः क्तिन् प्रत्यये कृते उपलब्धिः पदं निष्पद्यते। अधिगमप्रक्रियायां येः परिणामः जायते या सफलता प्राप्यते तदुपलब्धिनाम्नाऽभिधीयते। स्तराधारेण छात्राणामुपलब्धौ अपि भेदाः दृश्यन्ते, कारणं शिक्षाग्रहणाय समानमानसिकयोग्यता सम्पन्नछात्राः नागच्छन्ति। मानसिकयोग्यताधारेण छात्राणामुपलब्धिः वैविध्यं धत्ते। अर्जितज्ञानमूल्याङ्कनाय उपलब्धि परीक्षा भवति। उपलब्धिपरीक्षायाः अर्थः बहुभिः बहुधा स्पष्टीयते P.D. Pathak महोदयः निगदति यत् यस्याः साहाय्येन विद्यालये पाठ्यत्सु विषयेषु शिक्षमाणेषु कौशलेषु छात्राणां सफलताज्ञानं वा उपलब्धिज्ञानं प्राप्तुं शक्यते, सैव उपलब्धिपरीक्षा इति। Garrison महोदयः "The achiement test measures the present ability of the child on the external of his knowledge in a specific content area" इति अवादीत्। उपलब्धिपरीक्षा निर्माणं प्रामुख्येण छात्राणाम् अधिगमस्वरुपमापनाय सीमास्वरुपमापनाय च क्रियते। Thorndike, Hagan महोदयौ "When we use an achievement test, we are interested in determining what a person has learned to do after he has been exposed to a specific kind of instruction." इति परिभाषते। ज्ञानम्, उपलब्धिः, प्रमा इति एतत्सर्वम् अनर्थान्तरं भवति। संस्कृतवाङ्मये इमे शब्दाः परस्परं पर्यायेण प्रयुज्यन्ते। यद्यपि शास्त्रकाराः क्वचित् ज्ञानस्य द्वैविध्यमङ्गीकुर्वन्ति तथाऽपि, प्रायेण दर्शनेषु एकविधमेव ज्ञानमङ्गीक्रियते। अर्जितं ज्ञानं बुद्धिसहकृतेन व्यक्तिविशेषेण समुपजातं भवति। अतः मनोविज्ञाने ज्ञानम् उपलब्धिः इति भेदः दृश्यते। इदमर्जितं ज्ञानं व्यवहारपरिवर्तनहेतुभूतं पूर्वम् अविद्यमानं सत् सम्प्रति प्रत्यग्गोचरं भवति

* शिक्षाविभागः, केन्द्रिय संस्कृत विश्वविद्यालयः, रणवीर परिसर, जम्मूः

तदुपलब्धिरिति मनोविज्ञानिनां मतम्। इयमुपलब्धिः व्यवहारेणेव अनुमेया भवति। उपलब्धिरियं ज्ञानात्मिका कौशलात्मिका च भवितुमर्हति। ज्ञानात्मकोपलब्धिः अज्ञानज्ञानस्मरणादिभिः चिन्तनादिसम्प्रवर्तने तत्प्रकाशनेन च ज्ञायते। अनुभूत्यात्मकोपलब्धिश्च हावभावादिषु शाब्दिकशारीरिकचेष्टादिषु च अभूतपूर्वपरिवर्तनेन परिमाप्यते ज्ञायते वा। तथैव कौशलात्मकोपलब्धिः शाब्दिकाशाब्दिकव्यवहारैः प्रत्यक्षतां याति। एवञ्च प्रतिजीवं स्वतस्सिद्धेन स्वयंप्रकाशेन ज्ञानेन यत् खलु जन्मजातमिति परिकीर्त्यते किञ्चित् पारिस्थितिकतन्त्रमाश्रित्य विनूतनाज्ञातपूर्वञ्च परिज्ञायते। इदं हि परिज्ञानम् उपलब्धिशब्दभाक् भवति।

**को नाम उपलब्धिः? (What is achievement?)**

उपलब्धिर्नाम अधिगन्त्रा समर्जितस्य ज्ञानस्य परिमाणं भवति। उपलभ्यते इति उपलब्धिः इति स्पष्टो भवति। शिक्षणेन अनुदेशेनेन वा अधिगन्ता यत् किञ्चित् गृह्णाति रक्षति च। सामान्यतया कक्ष्यायाः वातावरणं विविधरुपेण सङ्घटितं सत् नानाक्रियाणां समन्वयकं भवति। अत्र शिक्षकक्रियाः, छात्रक्रियाः पारस्परिक क्रियाश्च अन्तर्भवन्ति। यत्र च सम्प्रेषणं, ग्रहणं, चिन्तनम्, अधिगमः मूल्याङ्कनमिति बहूनि तत्त्वानि प्रामुख्यं भजते। अस्यां प्रक्रियायाम् अधिगन्तारः विवेकेन परस्परं तत्त्वानां पार्थक्यं विज्ञाय तदनुसारेण विविधाः क्रियाः निर्वर्तयनित। इमाः क्रियाः अभिगन्तृकौशलमाश्रित्य वर्तन्ते। कक्ष्यावातावरणश्च अधिगन्तृकौशलस्य सम्प्रेरकं, तदनुकूलं, समस्यासमाधानात्मकं मनोविज्ञानसङ्घटनात्मकञ्च भवति। अतएव विद्यालयेषु कक्ष्यावातावरणे तदितरपरिस्थितौ च नाना उपलब्धयः अधिगन्तृणां स्वानुभवस्य आधारेण दृष्टिपथं यान्ति। कक्ष्यावातावरणस्य अनन्यत्वात् परिवारोपेक्षयाऽपि तस्मिन् उपलब्धीनाम् आधिक्यं गुणवत्ता च दृश्यते। इयमुपलब्धिः अनुभवजनैव भवति। यद्यपि अनुभवः उपलब्धिः ज्ञानम् इति एतत्सर्वं समानमेव तथाऽपि प्रवाहन्यायेन प्रथमतरङ्गः इव अनुभवः, उत्तरोत्तरतरङ्गाः इव उपलब्धयः भवन्ति। सोऽयं सूक्ष्मः कश्चन भेदः मनोविज्ञानिभिः अङ्गीक्रियते। उपलब्धिः नाम इदं तत्त्वं कक्ष्यावातावरणे सन्दृश्यमानं भेदम् आश्रित्य अधिगन्तृषु अपि भेदं जनयति। उत्तमञ्च वातावरणम् उत्तमोपलाब्धिं, सामान्यञ्च सामान्योपलब्धिम्, अधमञ्च अधमोपलाब्धिं जनयन्ति।

**उपलब्धिसम्प्रत्ययः (Concept of Achievement)**

उपलब्धिरिति सम्प्रत्ययः बहून् विषयान् अन्तर्भाव्य वर्तते। तदुक्तम्- Dreeban महोदयेन "It usually denotes activity and mastery, making an impact on the environment rather than statistically accepting it and competing against some

standart of excellence." विद्यालये पाठ्यमानेषु विषयेषु यावान् अंशः ज्ञानभागः कौशलभागो वा अधिगन्त्रा समर्जितः तावान् अंशः उपलब्धिः इति नाम्ना व्यवह्रीयते। या च परीक्षा प्राप्ताङ्कैः व्यवहारपरिवर्तनेन च स्पष्टं ज्ञायते। तथा च शैक्षिकोपलब्धिर्नाम वैदुष्यस्य कश्चन निर्दिष्टः स्तरः भवति। अयञ्च स्तरः शिक्षकनिर्मितपरीक्षाभिः प्रमापितपरीक्षाभिः उभयविधपरीक्षाभिर्वा निश्चीयते।

वस्तुतः विद्यालयेषु उपलब्धिरिति शब्देन किमभिप्रेयते इति चेत् शिक्षणोद्देश्यानां सम्प्राप्तिस्तरः एव उपलब्धिशब्देन सन्दर्शितः भवति। कक्ष्याविशेषस्य निर्दिष्टपाठ्यांशस्य कानिचन शैक्षिकोद्देश्यानि सम्भाव्यन्ते। तेषाम् उद्देश्यानाम् अधिगतिरेव शिक्षणधिगमप्रक्रियायाः लक्ष्यं भवति। एवञ्च उपलब्धिर्नाम तानि शैक्षिकोद्देश्यानि कियत् पर्यन्तं छात्रैरधिगतानि इति सूचनादण्डः एव भवति। इमानि उद्देश्यानि एव पाठ्यचर्यायाः लक्ष्यभूतानि भवन्ति यानि च छात्रेषु अपेक्षितं परिवर्त्तनं सम्भावयन्ति। तथा च कस्यचित् ज्ञानांशस्य कौशलांशस्य वा निष्पादनसामर्थ्यस्य सम्प्राप्तिरेव उपलब्धिः भवति। इदमत्र अवधेयं भवति योग्यता उपलब्धिश्च समाने न भवतः इति। यतः योग्याता तु उपलब्धेः उपादानकारणं भवति, न तु कार्यम्। अर्थात् उपलब्धिर्नाम व्यक्तिविशेषेण अर्ज्यमाना भवति, योग्याता नम मानसिकी शारीरिकी वा आन्तरिकी क्षमता भवति। यद्यपि उपलब्धिः योग्यतामाश्रित्य वर्तते तथापि योग्यता एव उपलब्धेः एकमात्र निमित्तकारणं न भवति अपि तु कारणेषु अन्यतमतां भजते।

### उत्तमोपलब्धौ शिक्षकस्य भूमिका

### (The role of Teacher in good achievement)

यदि कश्चित् अध्यापकः बहुभ्यः वर्षेभ्यः शिक्षकव्यवसायेन सम्बद्धः तर्हि सः प्रायेण विद्यालय वातावरणेन अनुयन्त्रितेः भवति। इदं ह्यनुवन्धनं तस्मिन् सफलैः अनुभवैः स्वीये व्यवसाये साफल्यम् आददाति। येन शिक्षकोऽधिगन्तारं यथोचितं मार्गयति च। अनुभविनः शिक्षकाः छात्रैस्सह उत्तमसाहचर्यसम्पादने सफलाः, छात्रेषु उत्तमाम् उपलाब्धिं जनयितुं च समर्थाः इति। केचित् छात्राः शिक्षकं शिक्षणं च प्रति प्रतिकूलमभिप्रायं धारयन्तोऽपि उत्तमोपलब्धिस्तरम् अध्यगच्छन्। एवम् अनुकूलमभिप्रायं धारयन्तः छात्राः न सर्वदा उत्तमोपलब्धिभाजः दृष्टाः। संस्कृतशिक्षकाणां शिक्षणक्षमतायाः संस्कृतछात्राणां संस्कृतविषयकोपलब्धेश्च मिथ सम्बन्धः वर्त्तते।

अत्र शिक्षणक्षमता नाम संस्कृतशिक्षकाणां शिक्षणक्षमता एव। छात्रोपलब्धिश्च संस्कृतछात्राणां संस्कृविषयकोपलब्धिमेव निर्दिशति।

**उपलब्धिपरीक्षायाः उद्देश्यानि (Objective of Achievement Test)**

1. पाठ्यमानेषु विषयेषु बालकानां ज्ञानस्य सीमामापनम्।
2. पाठ्यक्रमस्य लक्ष्यप्राप्यते वा उद्देश्यप्राप्तये बालकप्रगतेः ज्ञानम्।
3. शिक्षकस्य शिक्षणसफलतायाः अनुमानम्।
4. बालकानां विभिन्नविषयेषु क्रियासु वास्तविकस्थितेः ज्ञानम्।
5. बालकोपलब्ध्या सामान्यस्तरनिर्धारणम्।
6. बालकेभ्यः ज्ञानस्य विभिन्नक्षेत्रेषु दीयमानप्रशिक्षणपरिणामस्य मूल्याङ्कनम्।

**उपलब्धिपरीक्षायाः प्रकाराः (Types of Achievement Test)**

उपलब्धिपरीक्षा द्विविधः। यथा– प्रमापितपरीक्षणम्, शिक्षकनिर्मितपरीक्षणम्। शिक्षकनिर्मीतपरीक्षणं द्विविधः यथा– आत्मनिष्ठपरीक्षणम्, वस्तुनिष्ठपरीक्षणम्।

**शिक्षकनिर्मितपरीक्षणम्**

उपलब्धिपरीक्षणार्थं शिक्षकेण प्रश्नपत्रनिर्माणं क्रियते। शिक्षकनिर्मितपरीक्षणं द्वेधा विभक्तुं शक्यते यथा– आत्मनिष्ठ, वस्तुनिष्ठपरीक्षणञ्चेति। सामान्यरुपेण शिक्षकैः सर्वेषां विषयाणामुपरि परीक्षणार्थं प्रश्नपत्रं निर्मियते। सर्वेषां शिक्षकाणां योग्यतायां समानाभावात् शिक्षकनिर्मितपरीक्षणस्तरे वैविध्यं दृश्यते। अतः तेन छात्राणां मूल्याङ्कनं सार्थकतया न भवति।

**आत्मनिष्ठपरीक्षणम् (Self Test)**

आत्मनिष्ठपरीक्षणं मौखिकपरीक्षा निबन्धात्मकपरीक्षा भेदेन द्विविधं वर्तते।

**मौखिकपरीक्षा (Oral Test)**

मौखिकपरीक्षा प्राचीनाकाले उपलब्धिपरीक्षणस्य सर्वोत्तमसाधनमासीत्। तत्र छात्रस्य मूल्याङ्कनाय सर्वः क्रियाकलापः मौखिकः आसीत्, परन्तु आधुनिकयुगे लिखितपरीक्षायाः प्रचलनात् मौखिकपरीक्षायाः महत्त्वं ह्रसति। तथाऽपि प्राथमिककक्ष्यासु उच्चकक्ष्यासु प्रायोगिकपरीक्षासु, विज्ञानविषयेषु नियुकत्यर्थं साक्षात्कारेषु च मौखिकपरीक्षायाः नितराम् उपयोगिता अवलोक्यते।

**निबन्धात्मकपरीक्षणम् (Essay type Test)**

वस्तुनिष्ठपरीक्षणे उत्तराणि निश्चितानि भवन्ति। अत्र अङ्कनिर्धारणे साम्यता भवति। वस्तुनिष्ठपरीक्षणस्य रचना–प्रयोग–अङ्कनादिविषये बहुमौलिककार्यं विधत्तम्।

**संस्कृतक्षेत्रे उपलब्धिपरीक्षा (Achievement Test in Sanskrit)**

सुप्राचीनसंस्कृतभाषायामुपलब्धिपरीक्षाया: शैली अपि सुप्राचीना दृश्यते। तत्र बाह्यान्तरिकोपलब्धिपरीक्षे प्रामुख्यमभजताम् बाह्योपलब्धिपरीक्षणं पाठितविषयकज्ञानं समीक्षते। आधुनिकोपलब्धिपरीक्षा लिखितरुपा प्राचीनकाले आसीत्। तत्काले उपलब्धिपरीक्षा पूर्णतया मौखिक्येवासीत्। कारणं प्रामुख्येण उपलब्धिपरीक्षाया: साफल्यं कण्ठस्थीकरण-मध्यतिष्ठत्। उपलब्धिज्ञानाय सततमौखिकपरीक्षा आचार्यै: व्यधीयत्। पनन्तु छात्राण-मध्ययनसमाप्त्यनन्तरं छात्रोपलब्धिपरीक्षणं विद्वत्सभया अन्वस्थीयत। तत्र विद्वद्भि: प्रश्ना: अपृच्छयन्त, छात्रै: मौखिकरुपेण समाधीयन्त। प्राचीनकाले संस्कृतो- पलब्धिपरीक्षणं शलाकया वा शास्त्रार्थमाध्यमेन जायते स्म। इदानीं संस्कृतोपलब्धिपरीक्षणे आधुनिकरुपं सन्दृश्यते। साधारणविद्यालयेषु प्रवेशिकाद्युपलब्धिपरीक्षासु च वस्तुनिष्ठप्रश्ना: बाहुल्येन उपयुज्यन्ते।

**शिक्षणक्षमता (Teaching Competency)**

शिक्षणस्य परिणाम: एव विकासस्य मूलमन्त्र: तत् यस्मिन् कस्मिन् क्षेत्रे भवतु। शिक्षणस्य परिणाम: अधिगम: नाम्नाभिधीयते। व्यवहारेषु उत्तरोत्तरसामञ्जस्यपूर्णप्रक्रिया एव अधिगम:। अत: शिक्षणमेका जटिलप्रक्रिया वर्तते। यावत् शिक्षणं सरलं रुचिकरं बोधगम्यं पथप्रदर्शकञ्च न भवति, तावत् अधिगम: साधु: न जायते। तावत् साध्याधिगमस्य साफल्यं साधनशिक्षणप्रक्रियामाश्रित्य वर्तते। शिक्षणस्य साफल्यार्थं विषयज्ञानमेव बहु आवश्यकमिति। विषयज्ञाने सति शिक्षणस्य साफल्यार्थं प्रभाविकारकाणां कौशलानां उपयोगिता वर्तते इति कविकुलगुरु: कालिदास: न्यगदत्।

योग्याध्यापक: विषयज्ञाने, तदाविष्कारे च दक्ष: भवेत्। अध्यापकस्य कृते पाण्डित्यं केवलं नास्ति पर्याप्तम् अपि तु स: वाक् चतुर:, प्रत्युत्पन्नमति:, तार्किक: रुच्युत्पादकश्च भवेत्। शिक्षाया: साफल्यं तावत् शिक्षणक्षमतामाश्रित्य वर्तते। यत: क्षमतविहीनं शिक्षणं न क्वापि साफल्यमापादयति। साम्प्रतिकसमये शिक्षणं प्रविधियुक्तं वर्त्तते। प्रविधियुक्तं शिक्षणमपि शिक्षणक्षमता वक्तुं शक्यते, यत्र प्रभाव्यध्यापकस्य लक्षणं वर्तते तदापि प्रशिक्षिणे न अवाप्यते। प्राचीनकाले शिक्षका: वंशानुक्रमाधारेण जन्मत: स्वयंसिद्धा: आसन्। न काऽपि शिक्षणयोग्यता आसीत्। परन्तु शिक्षणप्रविधि: कस्मिन्नपि शिक्षणं क्षमतास्तरे कस्यामपि व्यक्तौ शिक्षणकौशलविकासाय सम्भाव्यं स्पष्टरुपेण प्रस्तौति। अत: शिक्षणकौशलविकासस्य सम्भाव्यतां विविच्य बह्व्य: शिक्षकप्रशिक्षणसंस्था: व्यवस्थाप्यन्ते। याभि: संस्थाभि: बहव: प्रशिक्षिताध्यापका: निष्पाद्यन्ते। शिक्षणशक्तिर्भवति शिक्षणक्षमता, यत: शिक्षणक्षमता शिक्षकप्रभाव, शिक्षकसामर्थ्यं,

शिक्षणसाफल्यं, शिक्षकयोग्यता इति बहवः शब्दाः अनर्थान्तरे प्रयुज्यन्ते, अनेन विवादः जागर्ति। शिक्षणक्षमतामाध्यमेन शिक्षकः तात्कालिकपरिणामं वा दीर्घकालकपरिणामं वा अवधत्ते किं पूर्वनिश्चितशिक्षणक्षमताधारेण परिणामनिष्पादनाय विभिन्नविद्यालयेषु, विभिन्नप्रकृतिनिष्ठछात्रेषु विषयेषु स्तरेषु अध्यापकाः व्यवहरिष्यन्ति इति अत्र यद्यपि विवादः जागर्ति तथापि शिक्षणक्षमता छात्रोपलाब्धिं प्रभावयति इत्यत्र नास्ति विप्रतिपत्तिः। प्रभाविशिक्षकः न तु केवलं स्वविषयस्योपरि दक्षः स्यात् अपि तु शिक्षणक्षमताऽधि कारी स्यात्। शिक्षणक्षमता छात्रोपलब्ध्या परिमाप्यते। सफलाधिगमः सफलशिक्षणस्य परिणामः सफलशिक्षणं शिक्षणक्षमताधीनं वर्तते।

## उपसंहार (Conclusion)

सफलशिक्षणं तदेव शिक्षणं यत् प्रभावपूर्णाधिगम सङ्घटयति। तत्र को विधिः का प्रक्रिया व्यवह्रियते इति सैद्धान्तिकप्रश्नः नास्ति। शिक्षणक्षमतया शिक्षणं प्रभावि छात्रोपकारि च भवति। शिक्षकयोग्यता प्रतिपादनाय प्रभाविशिक्षणकारकं प्रामुख्यं निर्वहति। प्रभाविशिक्षकैः विद्यालयस्य गौरवसंवर्धने राष्ट्रविकास पथि संस्कारोति। योग्यशिक्षकाः राष्ट्रस्य नागरिकाणां विकास्योत्तरदायित्वं निर्वहन्ति। गुणवद्भिः योग्यनागरिकैः राष्ट्रस्य प्रगतिर्जायते, राष्ट्रस्य प्रगत्या योग्यनागरिकाः, योग्यनागरिकेभ्यः, योग्यशिक्षकाः, योग्यशिक्षकाय च शिक्षणक्षमतायाः महती आवश्यकता वर्तते।

## सन्दर्भग्रन्थसूची-

1. A.A.D Saouza- "The Human Factor in Education." New Delhi.
2. Anderson, L.W.- "Teacher moral and Student achievement." Journal of Educational Research.
3. Mitzel H.E.- "Teacher effectiveness", Encyclopedia of Educational Research.
4. Passi, S.K. Sharma- "A Study of teaching competencies among secondary teachers." Department of Education, University of Indore, 1981.
5. Rolph, M.- "Factorial structure of teaching competnecies among secondary school Teachers." Ph.D. Thesis, M.S. University of Baroda.
6. Robert L. Ebel- "Measuring Educational achievement".
7. Shiksha surabhi- Department of Education, S.K.S.V.. Puri.



शिक्षामृतम्, वर्ष-2022, अंक-13 ISSN : 2349-6452

# आधुनिकशिक्षाव्यवस्थायां प्राचीनभारतीयशिक्षाव्यवस्थायाः प्रासङ्गिकता

डॉ. शिवाशीषपागलः*

**उपोद्घातः**

अद्यत्वे सर्वासामपि शैक्षिकसामाजिकसमस्यानां प्रमुखं कारणमस्ति- प्रचलितशिक्षा-व्यवस्थायां नैतिक-धार्मिक-सामाजिक-चारित्रिकविषयाणाञ्चाभावः। पाश्चात्यसभ्यता-संस्कृतेरन्धानुकरणेन अस्माकं पुरातनादर्शाः विस्मर्यन्ते। एतस्मात् शिक्षा अस्माकं जीवनतः अपसरति। छात्रासन्तोषः, अनुशासनहीनता, निर्धनता, वर्गसंघर्षः, सामाजिककलुषिता, राष्ट्रियविघटनं, भाषासमस्यादयः प्रतिदिनं प्रवर्धन्ते।

आधुनिकशिक्षाप्रणाली यद्यपि वैदिकशिक्षाप्रणाल्याः भिन्ना दृश्यते तथापि आधुनिक-शिक्षानियोजितुं विविधाः समस्याः समाधातुं प्राचीनतमा शिक्षाव्यवस्था मूलाधारो भवति। वैदिक-उपनिषत्-सूत्र-पुराण-बौद्धादीनां तत्कालीनायां शिक्षाव्यवस्थायां तथाभूताः आदर्शाः श्रद्धा-भक्ति-सेवा-आदर-आत्मानुशासन-सरलजीवन-उच्चविचारा-जीवनादर्शन-शिक्षण-कौशल-शिक्षाविषयकपाठ्यक्रम-ब्रह्मचर्य-नैतिकादीनि तत्त्वान्यनुसृत्य वर्तमानसमाजस्य आवश्यकतानुगुणम् उत्तमशिक्षाव्यवस्थां निर्मातुं शक्यते।

शिक्षाक्षेत्रे विद्यालयीयशिक्षाव्यवस्थायाः निरूपणं कथं कर्तव्यमासीत्, सामाजिक-व्यवहाराश्च कथं सम्पादनीया आसन् इत्येतेषां परिशीलनमावश्यकम्। शिक्षकाणां कर्तव्यं योग्यतास्वरूपादीनां विषये प्राचीनशिक्षाव्यवस्थायां प्रदर्शिताः वर्तन्ते। आचारेण व्यवहारेण च मानवानां शिक्षासंस्काराः जीवनमूल्यानि च सन्निविष्टानि सन्ति। यद्यदाचरति श्रेष्ठस्तत्त-देवेतरो जनः इति धिया एतेषां विषयाणां परिपालनं सर्वेषां हिताय अनिवार्यमिति। अतः प्राचीनशिक्षाप्रणाल्याः आदर्शतत्त्वानिवर्तमानशिक्षाव्यवस्थायां समावेशनं विधाय एतासां समस्यानां समाधानं कर्तुं शक्यते। तस्माद प्राधान्यत्वात् विषययोऽयमत्रोपस्थापितः।

* शिक्षाविभाग, केन्द्रीयसंस्कृतविश्वविद्यालयः
श्रीरणवीरपरिसरः, कोटभलवालः, जम्मू

प्राचीनकाले भारते शिक्षायाः स्वरूपमत्यन्तं सुव्यवस्थितमासीत्। यत्र व्यक्तेः लौकिकालौकिकजीवनोत्थानाय विविधप्रकारकाः शिक्षाः प्रदीयन्ते स्म। भौतिकाध्यात्मिक-जीवननिर्माणे, विभिन्नोत्तरदायित्त्वं निर्वोढुं चशिक्षायाः आवश्यकता महत्त्वपूर्णतमासीत्। मनुष्यसमाजस्य आध्यात्मिक-बौद्धिकश्चोत्कर्षः शिक्षामाध्यमेनैव सम्भवति। कथनमिदं सत्यं यत् शास्त्रात् विवेकाच्च शिक्षासम्पन्ना भवितुमर्हति। अपि च शिक्षया मनुष्याणां ज्ञानोदयो भवति। एतदर्थं ज्ञानोद्भवस्याधारः तत्त्वशास्त्रमिति कथ्यते। ज्ञानेन विद्यया वा मानवानां मुक्तिर्भवति, कार्ये च निपुणता आगच्छति। उक्तञ्च विष्णुपुराणे- "आगमोत्थं विवेकाच्च द्विधाज्ञानं तदुच्यते" अनेन विधिना ज्ञानालोकेन मनुष्यस्य जीवनमालोकितं भवति।

भारतीयशिक्षाव्यवस्था कालानुसारं त्रिधा विभज्यते। एकः तु प्राचीनकालो य वैदिककालादारभ्य बौद्धकालपर्यन्तं भवति स्म, अपरश्च मध्यकालीनशिक्षाव्यवस्था, इत्युक्ते मुस्लिम्कालीनमिति चान्तिमा आधुनिककालीनशिक्षाव्यवस्था या आङ्गलशासन-कालादारभ्य सम्प्रति प्रचालिता शिक्षेति। वस्तुतः शिक्षायाः सफलता तदुद्देश्यानामवश्यक-तानाञ्चोपरि निर्भरा इति। आङ्गलशिक्षाव्यवस्थायाः अभिलक्ष्यं पत्रलिपिकनिर्माणमेवासीत्। अतः प्राचीनशिक्षाव्यवस्थायां परिवर्तनं जातम्। परन्तु यद्यपि आधुनिकशिक्षाव्यवस्था प्राचीनशिक्षाव्यवस्थावत् नैव प्रतिभाति तथापि तस्याः प्रासङ्गिकता बहुषु स्थलेषु दरीदृश्यते। अधुना आधुनिककाले शिक्षाव्यवस्थायां प्राचीनशिक्षाव्यवस्थायाः प्रासङ्गिकता अधः प्रस्तूयते-

**उपनयनम्-**

प्राचीने विद्यारम्भसंस्कारस्य पश्चात् उपनयनसंस्कारकालो भवति स्म। यस्यार्थो भवति शिक्षानिमित्तं बालकः गुरोः समीपं गत्वा विद्याध्ययनाय प्रार्थयेत्। उपनयनं वर्णानां भेदानुसारेण कालानुसारेण वयसा च भवति स्म। तद्यथा ब्राह्मणस्य अष्टमे वर्षे क्षत्रियस्य एकादशे वर्षे, वैश्यस्य द्वादशे वर्षे उपनयनसंस्कारो भवति स्म। एवम् अस्य संस्कारस्य समयः यथा ब्राह्मणस्य वसन्ते, क्षत्रियस्य ग्रीष्मे, वैश्यस्य शरदर्तौ च भवति स्म। तथा चोक्तं आपस्तम्बधर्मसूत्रे-

**वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यं, गर्भाष्टमेषु ब्राह्मणं, गर्भेकादशेषु राजन्यं, गर्भद्वादशेषु च वैश्यम्।**[1] अयं संस्कारः सूत्रकालीनशिक्षा-व्यवस्थायामपि सम्पद्यते स्म, बौद्धकालेऽपि पबज्जासंस्कारः इति दृश्यते। उपनयनानन्तरं विद्यारम्भानुष्ठानं विविधशुभमुहूर्ते देवदेवीनामाराधनसमये प्रारम्भं स्म। एतादृशः संस्कारविधिः

1. आपस्तम्बधर्मसुत्रम्-1.1.19

पञ्चवर्षादारभ्यभवति स्म। **"प्राप्ते तु पञ्चमे वर्षे"**। वस्तुतः ऋषिभिः प्रदत्तं तथ्यमिदं प्रामाणी च करोतीति। अयं वयः तु मनोवैज्ञानिकरीत्या विद्यायाः समारम्भाय वयो भवति। यतोऽहि अक्षरारम्भेन सह शुद्धोच्चारणस्योपरि ध्यानं दीयते स्म। यतोऽहि शब्देन सह शाब्दिकभावानां एवं वाचकेन सह वाच्यस्य च तादात्म्यसम्बन्धो भवति स्म। महामतिकौटिल्यार्थशास्त्रानुसारं राजपुत्राणां शिक्षा अक्षरज्ञानेन-अङ्कज्ञानमाध्यमेन वा भवति। तथाचोक्तं महामति कौटिल्येन-

**वृत्तर्चालकर्मा-लिपिसंख्यानं चोपयुञ्जीत।**[1] प्रसङ्गेऽस्मिन् विष्णुधर्मोत्तरपुराणे उक्तं वर्तते यत्-

**सम्प्राप्ते पञ्चमे वर्षे अप्रसुप्ते जनार्दने।**
**एवं सुनिश्चिते काले विद्यारम्भं तु कारयेत्।।**[2]

नियमोऽयं वर्तमानेऽपि दृश्यते। सम्प्रति यद्यपि तादृशः संस्कारः मन्त्रोच्चारणविधिनानैव परिपाल्यते तथापि विद्यारम्भे अक्षराभ्यासनिमित्तं माता-पिता कदाचिच्छुभमुहूर्तं दृष्ट्वा मन्दिरं गत्वा वा गृहस्य देवादीनां समर्चापुरस्सरं तदाशिषञ्च प्राप्य सम्पाद्यते। शिक्षाप्राप्तुं समागतेभ्यः छात्रेभ्यः विद्यालये मोदकं दीयते स्म। आधुनिकशिक्षाव्यवस्थायां अक्षराभ्यासः कदापि पञ्चवर्षात्प्राक् नैव क्रियते।

**विद्यालयस्य स्थापना-**

विद्यालयः समाजस्य लघुरूपं भवति। समाजस्य प्रमुखोद्देश्यसाधनार्थम् अस्य आविर्भावो जातः। उत्तमशिक्षणाय उत्तमाधिगमपरिवेशस्यावश्यकता भवति। अतः परिवेशोपरि छात्राणामधिगमो निर्भरः। तदर्थं विद्यालयस्य स्थापना परिवेशमाश्रित्य करणीया। प्राचीनकालीनशिक्षायां गुरुकुलप्रणाली प्रचलितासीत्। गुरुकुलानि ग्रामेभ्यः दूरं कुत्रापि शान्तिपूर्णवातावरणेषु अरण्यप्रदेशेषु निर्मितानि आसन्। एतस्मात् शिक्षणविषये एकाग्रता, निराडम्बरजीवनशैली च आस्ताम्। तत्र गुरवः छात्रान् स्वपुत्रान् इव पालयन्ति स्म।

आधुनिकयुगे नगरीकारणप्रभावात् जनाः नगरेषु हि प्रवसितुं समुत्सुकाः सन्ति। अस्यामवस्थायां यद्यपि शिक्षासंस्थानां स्थापनं नगरात् बहिः कर्तुं असौविध्यं भवति तथापि तासां संस्थानां निर्माणं नगरकोलाहलात् बहिः शान्त-स्वच्छ-स्वास्थ्यकर-प्राकृतिकपरिवेशे दृश्यते। साम्प्रतं गुरुकुलानि स्थानेषु आवासीयविद्यालयाः (रेसिडेन्सियल) दृश्यन्ते। यत्र अभिभावकाः स्वकीय-बालानाम् उत्तमशिक्षार्थम् छात्रावासे प्रवेशं कारयन्ति

1. अर्थ.शा- 1.2
2. विष्णुधर्मशास्त्रपुराणम्

तत्र छात्राः आत्मनिर्भराः भवन्ति। आधुनिकयुगेऽपि शिक्षणसंस्थानां निर्माणकार्यं प्रबुद्धाः नगरकोलाहलाद्बहिः सुशान्तवातावरणे कर्तुं प्रयतमानाः दृश्यन्ते। एतादृश्यः शिक्षासंस्थाः न केवलं छात्राणां मानसिक-शारीरिक-बौद्धिकाः विकासं कुर्वन्ति। अपितु विविधेभ्यः राजनैतिककुटिलेभ्यः अवाञ्छनीयतत्त्वेभ्यः छात्रान्संरक्षन्ति।

**गुरुः**

वैदिकयुगे गुरोः गौरवमासीत्। गौरवमिदं विविधैः सन्दर्भैः गीतं वर्तते। गुरुस्तु त्रिदेवः तथा च परब्रह्ममयः आसीदिति प्रसिद्धमेव। आचार्यस्य स्वरूपविषये उक्तं यत्- यः शिष्यान् चानुशास्ति, तान स्वाचारैः समाच्छादयति च तथा चोक्तम्-

> **आचार्यः अस्मादाचारं ग्राह्यत्याचिनोत्यर्थानाचिनोति बुद्धिमिता वा।**
> **यस्माद् धर्ममाचितानि स आचार्यः॥**[1]

आचार्याः शिष्यानां कृते आदर्शपुरुषा आसन्। तेषां सदाचारणानि शिष्यान् प्रभावयन्ति। गुरुः संयमी, वाचस्पतिः, ज्ञाननिधिः, तत्त्वदर्शी, तत्त्ववित् च भवति। तस्य व्यक्तित्त्वे संयम्, तपः, त्यागः, क्षमा, दया, उदारता प्रभृतीनां गुणानां समावेशो भवति। वर्तमान-शिक्षाप्रणाल्यां Teacher इति शब्दः व्यवह्रियते। यः गुरोः समानार्थकशब्दो भवति। अत्र प्रयुक्तः प्रत्येकाक्षरम् आचार्यस्य उत्कृष्टं व्यक्तित्त्वं बोधयति। तद्यथा- Teacher इति शब्दस्यार्थः-

T- Tactful अथवा Trend पद teaching methodology इत्यस्य वाचको भवति। यस्यार्थ वाक्चातुर्यः अथवा शिक्षणप्रविधौ निपुणो भवति।

E- Enthusiasm इति उत्साह इत्यस्य सूचको भवति।

A-Address अथवा Attentiveness इत्यस्य द्योतको भवति। अस्यार्थः सम्बोधनं ध्यानकेन्द्रीकरणं वा भवति

C- Capacity of Leadership इति शब्दः नेतृत्त्वक्षमतां बोधयति।

H- Helpful इति सहायक इत्यस्य सूचको भवति।

E- Emotional Stability इति संवेगात्मकं संतुलनं प्रदर्शयति।

R- Respectful अर्थात् Reserve इत्यस्य सूचको भवति। अस्यार्थः आदरणीयः सुरक्षितो वा भवति।

---

1. आप.ध.सू- 1.1.1.14

एवं प्रकारेण शिक्षकः एकं तादृशमुपकरणं येन प्रत्यक्षाप्रत्यक्षरूपेण मानवानामुन्नतिः क्रियते। शिक्षकः बालमनोवैज्ञानिको भवति। सः छात्रस्य रुचेः, योग्यतायाश्च, मूल्याङ्कनं कृत्वा उचितमार्गं निर्दिशति। एवं रूपेण प्राचीनकालीनशिक्षाव्यवस्थायां गुरुः शिष्यान् सन्मार्गं प्रदाय उत्तमनागरिकं निर्मातुं महत्त्वपूर्णभूमिकां निर्वहति स्म। प्राचीनभारते गुरवः त्रिधा भवन्ति। यथा– **आचार्यः, गुरुःउपाध्यायश्चेति** कुत्रचित् षट्प्रकारकाः अपि भवन्ति। सूत्रकालीनशिक्षाव्यवस्थायामपि बहुशिक्षकव्यवस्थाः परिकल्पिता। शिक्षकाणां योग्यता आधारेण तेषां क्रमाः अपि भिन्नाः वर्तन्ते। महाभारते उद्योगपर्वणि वेदाध्यापकाः त्रिधा भवन्ति। ते यथा– छन्दोवित् (बहुपाठी), वेदवित् (आख्याता), वेद्यवित्। मनुसंहितायामपि एतादृशो विभागो वर्तते। साम्प्रतं प्रचलितशिक्षाव्यवस्थायां योग्यताधारेण आचार्यः, सहाचार्यः, शिक्षका इत्यादयः गुरूणां विभागाः वर्तन्ते।

**बहुशिक्षकव्यवस्था**

सूत्रकालीनशिक्षाव्यवस्थोपनिषत्कालीनशिक्षाव्यवस्थामनुकरोतीति तत्र नास्ति सन्देहः। अत्रापि बहुशिक्षकव्यवस्था परिकल्पिता वर्तते। पुराकाले युवब्राह्मणाः ज्ञानार्थं बहुशिक्षकान् प्रति गच्छन्नासन्। प्रत्येकशिक्षकः विशिष्टवेदस्य वेत्ता भवति स्म। तस्मात् छात्राः एकाधिकवेदान् अध्येतुमेकाधिकशिक्षकान् पार्श्वे व्रजन्ति स्म। यावत्पर्यन्तं विषयज्ञानं नावगच्छति तावत्पर्यन्तं विशिष्टविषयसम्बन्धगुरुणा सह भवितव्यमिति नियमः परिकल्पितो वर्तते। यदि गुरोः योग्यता नास्ति चेत्तर्हि अपरशिक्षकपार्श्वे अध्येतुम् अवसरो भवति स्म। आधुनिकशिक्षाव्यवस्थायामपि इयं बहुशिक्षाव्यवस्था विषयानुगुणं दृश्यते यथा भाषाशिक्षकः, विज्ञानशिक्षकः, गणितशिक्षक इत्यादयः भिन्ना भवन्ति। कोऽपि शिक्षकः सर्वविषयेषु निष्णातो नैव भवति। तस्मादाधुनिककालेऽपि शिक्षाव्यवस्थायां विषयेषु गहनज्ञानार्थं बहुशिक्षकव्यवस्था परिकल्पिता वर्तते।

वर्तमानसन्दर्भे द्वि–मुखी, त्रि–मुखी वा शिक्षणप्रक्रिया सम्बन्धी विचारधारा किमपि नूतनं नास्ति। इयं विचारधारा उपनिषद्साहित्ये तेनानुप्राणिते इतरे साहित्येऽपि दृश्यते। यत्रव्यक्तित्त्वविकासः सामाजिकपृष्ठभूमौ उपनयनसम्बन्धीविचारश्च मूलरूपेण निहितोऽस्ति। शिक्षोद्देश्यविषयेऽपि आधुनिकशिक्षणविद्या वैदिकविचारधारायामनुप्राणितो भवति।

**शैक्षिकसत्रम्**–

प्राचीनशिक्षाव्यवस्थायां शिक्षाभ्यासस्य समयावधिविषये विशेषरूपेण उल्लिखितं नास्ति। तथापि उपाकर्मोत्सर्जनक्रियोपरि विशेषसङ्केतः प्राप्यते। यत्र उपाकर्मविधिरयं

सत्रस्य प्रारम्भिकविधिरूपेण श्रावणपूर्णिमायां भवति स्म। एवम् उत्सर्जनमिति शिक्षासत्रस्य समाप्तिः पौषमासपूर्णिमां प्रति संङ्केतयति स्म।

**शिक्षणविधयः**

शिक्षाव्यवस्थायां शिक्षणविधिस्तु प्राणभूतो भवति। शिक्षणविधिरेव शिक्षणपरम्परामपि सूचयति। वैदिकसाहित्यस्य शिक्षायाः अयं प्रवाहः मूलतः शिक्षणविधिवशादेव भवति। वैदिकशिक्षाया अवलोकनेन प्रचलिताः शिक्षणविधयः ज्ञायन्ते अस्माभिः।

व्याख्यानविधेः प्रयोगम् अधिकं दृश्यते स्म। व्याख्याने आचार्या शिक्षणीयतथ्या-नामुपदेशं कुर्वन्ति स्म। उपनिषच्छिक्षणे शिष्याणां ज्ञानवर्धनाय आध्यात्मिकसन्देहनिवारणाय च तर्कविधिः विशिष्टभूमिकां निर्वहति। मन्त्रं तथा भाष्यं कण्ठस्थ्यनन्तरं छात्राः विषयोपरि मननं, चिन्तनञ्च कुर्वन्ति स्म। तदानीन्तनकालपर्याये स्वाध्यायः तथा मननमुपरि अधिकबलं प्रदीयते स्म। महाभारतकाले प्रवचन-भाषणं प्रणाल्योऽतिरिक्तो व्याख्या, प्रश्नोत्तरः, वाद-विवादमाध्यमेन च विद्या प्रदीयते स्म। संगोष्ठी (सेमिनारप्रक्रिया) तस्मिन् समये आसीत्। प्राचीनशिक्षाव्यवस्थायां शैक्षिकपर्यटनमाध्यमेन ज्ञानप्राप्तिर्विधिः प्रचलितासीत्। शिक्षा केवलं विद्यालयेषु पुस्तकेषु आबद्धा नासीत्। छात्रेभ्यः प्राकृतिकशिक्षा, आरण्यकशिक्षा प्रदीयते स्म। अस्मिन् विषये महाभारते अरण्यपर्वणि 263 अध्याये विशदचर्चा वर्तते। ऋग्वेदे उक्तं वर्तते यत्-

**ब्रह्मचारी चरति वेविषद्विषः स देवानां भवत्येकमङ्गम्।**
**तेन जायामन्वविन्दद्बृहस्पतिः सोमेन नीतां जुह्वं न देवाः।।**[1]

तदानीन्तनसमयेऽपि कृषिशास्त्रे, चिकित्साशास्त्रे वास्तविकं व्यावहारिकं ज्ञानं च प्राप्तये देशाटनमेव प्रकृतिनिरीक्षणं भवति स्म। आधुनिकशिक्षाप्रणाल्यां स्वीकृतपर्यटनप्रणाली बौद्धशिक्षाव्यवस्थायामपि दृश्यते स्म। शिक्षाप्रसाराय पर्यटनविधिः अत्यन्तोपयुक्तः आसीत्। भ्रमराः हानिं विना पुष्पस्य रसं पिबन्ति तथैव मुनयः ग्रामेषु भ्रमणं कृत्वा शिक्षायाः प्रसारं कुर्वन्ति स्म। तथा चोक्तं जातके-

**यद्यपि भ्रमरः पुष्पं वण्णगन्धं अहठेय**
**पतेति रसमादाय एवं गामे मुनी च।।**[2]

---

1. ऋग्वेदः-10.109.5
2. जात.- 1.8.78

**शिक्षकप्रशिक्षणव्यवस्था**

वर्तमानकालिकशिक्षकप्रशिक्षणविद्यालयवत् प्राचीनकाले प्रशिक्षणविद्यालयो नासीत्। परन्तु अध्ययनप्रशिक्षणकार्यं युगपत् प्रचलिता आसीत्। उच्चकक्षीया: छात्रा: निम्नकक्षीयान् छात्रान् पाठयन्ति स्म। प्रतिभाशालिछात्राणां प्रतिभा परिप्रकाशाय अयमेकोऽवसर:। प्रणाल्यामस्याम् अध्यापकानां अभावो नैव भवति: स्म। आर्थिकदृष्ट्या प्रणालीयं श्रेष्टा भवति। अध्यापनेन छात्राणां विषये स्पष्टतागच्छति। अनेन व्याख्या-कला, आत्मविश्वास-सहानुभूति-सहयोग-परिपक्वतानेतृत्त्वादिक्षमतानां विकासो भवति स्म। प्रचलितेयं प्रणाली अग्रिमछात्रपठनपद्धतिरित्युच्यते। विषयोऽयं जातकग्रन्थे उल्लिखितो वर्तते स्म। कुरुराजपुत्रो विद्यायां प्रवीणतां प्राप्य अनुजान् शिक्षयितुं दायवद्ध: आसीत्। प्राग्बौद्धकाले इयं प्रणाली ब्राह्मणकालेऽपि प्रचलितासीत्।

आधुनिककाले इयं प्रणाली मोनिटोरियल पद्धति इति नाम्ना विधीयते। अद्यापि प्रणालीयं संस्कृतपाठशालायां प्राचीनकालानुसारेण प्रचलितास्ति।

**परिशीलितग्रन्थसूची-**

1. **प्राचीनभारतीयशिक्षणपद्धति:**- डॉ. अनन्तसदाशिव अल्तेकरमहोदया:
2. **भारते शिक्षाप्रशासनम्**- Dr. S.N. Mukherji
3. **भारतीय शिक्षा का इतिहास**- जौहरी एवं पाठक्
4. **भारतवर्षे वैदिककालीनशिक्षापद्धति:**- डॉ. लक्ष्मणचन्द्र, सञ्जयप्रकाशनं, दिल्ली।
5. **प्राचीन भारत में शिक्षा व्यवस्था**- डॉ. सुनीता सिंह।
6. **वैदिकशिक्षा पद्धति**- प्रो. भास्करमिश्र:, नागपब्लिकेशन्, नई दिल्ली-110007
7. **शिक्षक और समाज**- प्रो. भास्करमिश्र:, नागपब्लिकेशन्, नई दिल्ली-110007
8. **उपनिषद्भाष्यम्**- वीरराघवाचार्य:, चेन्नै
9. **भारत की शिक्षा व्यवस्था**- मनोजकुमार गुप्ता, विश्वभारती पब्लिकेशन्, नई दिल्लीत: 110002।
10. **भारतीय शिक्षा व्यवस्था**- लक्ष्मीभार्गव:

**संस्कृतग्रन्थाः**

11. **वेदकालीन नारीशिक्षा**- डॉ. प्रमोदीनि पण्डा
12. **पुरातनीशिक्षा**-लोकमान्यमिश्रः
13. **ऋग्वेदसंहिता**-डॉ. जियालाल काम्वोज, विद्यानिधिप्रकाशन, दिल्ली

- **आङग्लो ग्रन्थाः**

14. **Ancient Indian Education**- RadhakundMukherji मोतीलाल वणारसी दास 110007 पब्लिकेशन, नई दिल्ली।
15. **Examination in Ancient India-** S. Narin
16. **Education inAncient India**, S.M. Rakhe, प्रकाशनं श्रीसद्गुरुपब्लिकेशन, नई दिल्ली।
17. **Development of Educational System in India**, A.S. Thakur, Sandeep Berwal, शिप्रा पब्लिकेशन नई दिल्ली।



शिक्षामृतम्, वर्ष-2022, अंक-13 ISSN : 2349-6452

# शिक्षणप्रक्रियायां विद्यालयीयपरिवेशस्य उपादेयता

डॉ. स्नेहलता*

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं-स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः।।**[1]

इति आचार्यमनोः वचनानुसारं चरित्रशिक्षां ग्रहीतुम् आत्मोन्नतिं च साधयितुं समग्रविश्वस्य जनाः भारतं समागत्य शिक्षां सम्प्राप्य विद्यावन्तः भूत्वा आनन्दमनुभवन्ति स्म। तदर्थमेव भारतं समग्रविश्वे सुप्रसिद्धमासीत्। भारते शिक्षायाः अयमुपक्रमः विशेषरूपेण सञ्चाल्यते स्म गुरुकुलेषु। यत्र उत्तमे परिवेशे शिष्यस्य सर्वविधविकासार्थं प्रयत्नः विधीयते स्म। तेषां गुरुकुलानां महन्महत्त्वं आसीद्यत्र विना भेदभावं राज्ञां पुत्राः सामान्याः बालकाश्चापि सहैव स्थित्वा अध्ययनं कुर्वन्ति स्म। उत्तमस्य परिवेशस्य अभावे न कदापि बुद्धेः व्यक्तित्त्वस्य च विकासः सम्भाव्यते।

अयमेव विषयः आधुनिकैः मनोविद्भि प्रचारितः वर्तते यत् प्रायः बालकानां व्यक्तित्वं विद्यालयस्य गृहस्य च परिवेशोपरि आधारितमस्ति। विद्यालयपरिवेशे अवश्यं व्यक्तित्वविकासः सम्भवति यतो हि तत्रत्यं सङ्घटनं, वातावरणं, परिवेशः च अवश्यं बालकानां विचारशीलव्यक्तित्वस्य निर्माणे, ज्ञानार्जनस्य अभिरुच्युत्पादने, तेषां अन्तःकरणे मूल्यानां संस्काराणां च निवेशने, ज्ञानस्य धर्मस्य च समन्वये, समाजसेवायाः कर्त्तव्यनिष्ठायाः भावजागरणाय, विश्वमानवीयमूल्यानां संरक्षणाय विद्यालयीयः परिवेशः अत्यन्तम् उपकारकः।

## शिक्षा विद्यालयश्च

भारतीयसमाजे शिक्षाप्रक्रिया सर्वदाऽपि जीवनलक्ष्यसाधिका श्रेष्ठतमा प्रक्रिया इति सर्वे जानन्त्येव। अत एव सर्वेभ्यः अपि शिक्षायाः समुचितव्यवस्थां कल्पयितुं संविधाने अपि नीतयः निर्मिताः। भारतीयसंविधानस्य 45 तमधारायां व्यवस्था कृता वर्तते यत् राज्यम् संविधानारम्भस्य दशवर्षाभ्यन्तरे एव सर्वेभ्योऽपि 14 वर्षपर्यन्तेभ्यः

---

* (अतिथिप्राध्यापिका) शिक्षाशास्त्रविभागः, केन्द्रीयसंस्कृतविश्वविद्यालयः, श्री रणवीरपरिसरः, कोटभलवाल, जम्मू।

1. मनुस्मृतिः, 2.20

बालकेभ्यः निश्शुल्करूपेण अनिवार्यरूपेण च शिक्षा दद्यात् इति।

शिक्षणप्रक्रिया तु विना गुरुम् उत्तमविद्यालयपरिवेशस्य च अभावे सफला न भवति। तदर्थं सर्वसौविध्यसम्पन्नविद्यालयानां विश्वविद्यालयानां च निर्माणार्थमपि सर्वकाराणां प्रयासः भवति। सम्प्रति तु निजिविद्यालयानां महाविद्यालयानां च शिक्षायाः पुरोगतिसम्पादने महद्योगदानं दृश्यमानमस्ति। गृहस्य विद्यालयस्य च परिवेशः एव मानवविकासे प्रमुखः भवति। अतः सर्वत्रापि गृहस्य विद्यालयस्य च उत्तमोत्तमपरिवेशस्य निर्माणार्थं प्रयत्नाः विधीयन्ते। सर्वकारपक्षतः अपि अत्र विशेषावधानं भवति। तद्यथा–

- उच्चशिक्षायाः समुचितविकासार्थं विश्वविद्यालयादिसंस्थानां तत्रत्यपरिवेशस्य विषये पर्यवेक्षणनिमित्तं एन्.सी.टी.ई., यू.जी.सी. इत्यादि संस्थानां संघटनं कृतमस्ति।
- माध्यमिकस्तरे शिक्षणस्य समुचितव्यवस्थानिमित्तं एन्.सी.ई.आ.टी. राज्यस्तरे च एस्.सी.ई.आ.टी. इत्यादिसंस्थानां संघटनं कृतं वर्तते।
- विद्यालयस्य प्रत्येकमपि क्रियाकलापः कथं सुष्ठु जायेत इत्येतदर्थं प्राध्यापकेभ्यः विशेषतः प्रशिक्षणं दीयते।

विद्यालयेषु विद्यमानया उत्तमपरिस्थित्या उत्तमेन च परिवेशेन एव विद्यार्थी अपि उत्तमोत्तमं विकासं सम्पादयितुं शक्नोति। इत्यतः एव अध्ययनाध्यापनेन सह पाठ्य-सहगामिक्रियाणां कृतेऽपि महन्महत्त्वं प्रदीयते शिक्षाविद्भिः।

### विद्यालयीयपरिवेशः

विद्यालयस्य परिवेशे न केवलं तत्रत्यं भौगोलिकपर्यावरणम् अन्तर्भवति अपितु विद्यालयस्य प्रत्येकमपि तत्त्वं तच्च विद्यार्थिनं प्रभावयति तत्सर्वमपि विद्यालयस्य परिवेशे अन्तर्भवति। तत्र हि मानवीयसंसाधनानि, भौतिकवस्तूनि, आन्तरिकमानसिक-चिन्तनानि च अन्तर्भवन्ति। मानवीयसंसाधनेषु प्रधानाचार्यः, शिक्षकाः, सहपाठिनः, कर्मचारिणश्च अन्तर्भवन्ति। भौतिकवस्तुषु विद्यालयभवनम्, कक्षाप्रकोष्ठाः, पाठ्योपकरणानि, खाद्यपानादिवस्तूनि च अन्तर्भवति, एतदतिरिक्तं विद्यालयस्य स्थानं, क्षेत्रं परितः विद्यमानानि पर्यावरणीयतत्त्वानि, वायुः, जलं प्रदूषणम्, शिक्षकानां व्यवहारः, सहपाठिनां सहयोगः, कर्मचारिणाम् आत्मीयत्वम्, क्रीडांगणम्, पाठ्यसहगामिन्यः क्रियाः, इत्यादीनि सर्वाण्यपि तत्त्वानि अन्तर्भवन्ति। एतैः तत्त्वैः एव विद्यालयस्य परिवेशः परिपूर्णः भवति।

अयं परिवेशः सुसंघटितः चेत् शिक्षणप्रक्रिया सुष्ठु प्रवर्तते तेन छात्रस्य अभिवृद्धिः निश्चिता भवति परिवेशे नष्टे हि छात्रविकासः पूर्णतया अवरुद्धः भवति। अवरुद्धे

विकासे जीवनं नष्टं भवति इत्यत्र नास्ति संशयः। अतः विद्यालयस्य परिवेशस्य शिक्षणप्रक्रियायां ततश्च छात्रविकासे महती भूमिका अस्ति एव।

### विद्यालयीयपरिवेशनाशकतत्त्वानि

शिक्षायाः व्यापकप्रचारस्य प्रसारस्य चानन्तरमपि वस्तुतः न कश्चन अत्यधिकः विकासः दृश्यते कारणन्तु एकमेव विद्यालयेषु शिक्षकानामभावः अथवा प्रशिक्षित शिक्षकानामभावः। एतद् कारणादेव विद्यालये उत्तमोत्तमपरिवेशस्य निर्माणं कर्तुं न शक्यते येन छात्राणां समुचितः विकासः जायेत। विद्यालयपरिवेशस्य साक्षात्प्रभावः छात्राणां विकासे जायते इति बहूनां मनोविदामभिप्रायः। तदनुरोधेन तत्परिवेशस्य निर्माणं प्रशिक्षितप्राध्यापकैः विना न सम्भाव्यते। अतः प्रशासकानाम् अध्यापकानां च विशेषतः दायित्वमिदम् भवति यत् ते विद्यालयीयपरिवेशं सम्यक् निर्माय छात्रहितं सम्पादयेयुः।

अद्य शिक्षाजगत् नैकप्रकाराणाम् नवचिन्तनानां स्वानुभूतप्रयोगाणां च कारणतः प्रभावितं दृश्यते। विद्यालयस्य संघटनात्मकः परिवेशः विद्यालयीयप्रशासनस्य क्षेत्रेऽपि महत्त्वपूर्णा संकल्पना विद्यते। एतदन्तर्गतं विद्यालये व्याप्तः विविधप्रकारकः परिवेशः उच्चात् न्यूनक्रमेण श्रेणीबद्धं क्रियते। श्रेणीकरणाय विश्लेषणस्य आधारः अपि प्रस्तूयते येन तदाधारेण विद्यालये वांछनीयपर्यावरणं सृज्यते।

### उत्तमशिक्षणवातावरणे छात्रविकासः

प्राचीनकालादेव शिक्षा मानवस्य अन्तर्निहितशक्तीनां प्रकटीकरणस्य सर्वाधिकसशक्तं साधनं वर्तते। मानवीयविकासस्य कालानुक्रमिकपरिवर्तनस्य समनन्तरमेव शिक्षाप्राप्तेः साधनेषु अपि विविधपरिवर्तनानि जातानि। एकस्मिन् पक्षे वेदाध्ययनस्य माध्यमः केवलं श्रुतिः आसीत् तत्रैव मुद्रितसामग्र्याः आविष्कारानन्तरं शिक्षायाः विविधसोपानानां विकासः सञ्जातः येन शिक्षाजगति क्रान्तिकारिपरिवर्तनानि जातानि। यस्मात् शिक्षायाः वर्तमानं स्वरूपं अस्मत्समक्षे विद्यते। शिक्षायाः विविधसाधनेषु औपचारिक-अनौपचारिकसाधनानि च बहूनि विकसितानि। ततः औपचारिकेषु प्रमुखं भवति विद्यालयः। अद्य विद्यालयः तादृशी संस्था स्वीक्रियते यत्र बालकाः स्वयोग्यतानां, क्षमतानां, रुचीनां च अनुसारं स्वविकासं साधयन्ति। समाजस्य आदर्शानाम्, मूल्यानाम्, परम्पराणाम्, आशानाम्, आकांक्षानाम् च उज्जीवनाय विद्यालयः एव शिक्षायाः केन्द्रं स्वीक्रियते। यथा जान् डीविवर्यः निगदति- 'विद्यालयः तादृशं विशिष्टं वातावरणं विद्यते यत्र जीवनस्य केषाञ्चन गुणानां विशिष्टक्रियाणां व्यवसायानां च शिक्षा अनेन उद्देश्येन दीयते यत् बालकस्य विकासः अपेक्षितदिशि स्यात्।

भारतीयपरिवेशे यः कोऽपि विकासः कस्यापि जनस्य जीवने सम्भवति सः विकासः विद्यालयस्तरे प्रचाल्यमानशिक्षणपरिवेशकारणात् एव चरमोत्कर्षतां प्राप्नोति इति सर्वेषाम् अपि शिक्षाविदाम् अभिप्रायः। ततः एव सज्जनता दुर्जनता च समुत्पन्ना भवति। सम्प्रति भारतीयपरिवेशे 40 प्रतिशतादधिकाः बालकाः सांस्कृतिकहीनता-संवेगात्मक-आर्थिकदारिद्र्यादिपृष्ठभूमिकया विद्यालये प्रविशन्ति। अस्यामवस्थायां तेषां मानसिकदुर्बलतानां शोधपूर्वकं तेषां व्यक्तित्वनिर्धारणार्थं विविधविद्यालयीयव्यवस्थाः तादृशाः उत्तमोत्तमाः कल्पनीयाः भवेयुः येन वास्तविकः विकासः सम्भाव्येत। माध्यमिकस्तरीय-च्छात्राणां एव मनोवैज्ञानिकः पक्षः अपि विद्यालयेन सह पूर्णतया सम्बद्धः अस्ति। यतो हि अस्मिन् एव काले विद्यार्थिव्यक्तित्वस्य असंतुलितः विकासः, निम्नबौद्धिकता-संवेगानां च प्रदर्शनकारणाद् संघर्षस्थितिः, अवसादः, नकारात्मकचिन्तनादीनि मानसिकप्रवृत्तयः जागृताः भवन्ति एतदर्थं विद्यालयीयपरिवेशः एव छात्रजीवनस्य समस्यानां परिहारं कर्तुं सम्भवति इति मनोविज्ञानिनां आशयः। विद्यालये विद्यमानः शिक्षकः एव जीवनस्य आदर्शरूपः भवति छात्राणां कृते। तत्रत्यच्छात्राः आजीवनमपि आत्मीयमित्ररूपेण तिष्ठन्ति। अतः विद्यालयस्य शिक्षणपरिवेशः एव जीवननिर्माणे महत्त्वपूर्णसोपानं भवति। अधोलिखितविद्यालयीयवैशिष्ट्यानि छात्रविकासे विद्यालयस्य भूमिकां स्वतः एव स्पष्टयन्ति। तद्यथा-

- **लघुसमाजः** - विद्यालयः समाजस्य आवश्यकतानां मूल्यानाम् आकांक्षानां च प्रतिबिम्बः भवति। शिक्षाप्रणाली समाजस्य आवश्यकतानुसारं यदा यदा परिवर्तिता भवति विद्यालयस्य स्वरूपमपि परिवर्त्यते।
- **विशिष्टं वातावरणम्** - विद्यालयः शिक्षाप्रक्रियायाः संचालनार्थं विशेषवातावरणस्य सर्जनं करोति। अयं वातावरणं सरलं शुद्धं सन्तुलितं च कृत्वा प्रस्तौति।
- **शिक्षायाः साधनम्** - विद्यालयः शिक्षायाः औपचारिकं सक्रियं च साधनं वर्तते। यत्र देशस्य भविष्यस्य च निर्माणं भवति। तथा विद्यार्थीन् भाविजीवनाय निर्माति।
- **बालकेन्द्रिता** - विद्यालये बालकस्य वैयक्तिकविभिन्नतानुसारं शिक्षा प्रदीयते। विद्यालयः बालकेन्द्रितशिक्षायाः माध्यमेन बालकव्यक्तित्वस्य सर्वांगीणं सन्तुलितं च विकासं करोति।
- **सामाजिक प्रगतेः साधनम्** - विद्यालयः समाजाय योग्यान् नागरिकान् प्रदाय तस्य विकासे महान्तं योगदानं करोति। एतदाधारेण एव नूतनानां विचाराणाम् आविर्भावः भवति, ज्ञानस्य कौशलस्य च अभिवृद्धिः सुनिश्चिता क्रियते।

अस्मिन् विषये एस्. बालकृष्णजोशीवर्यः कथयति यत् "कस्यापि राष्ट्रस्य विकासस्य प्रगतेश्च निर्णयः विधानसभासु, न्यायालयेषु, उद्योगभवनेषु च न भवति अपितु विद्यालयेषु भवति।" इति शम्।

**सन्दर्भग्रन्थसूची-**

1. उच्चतर शिक्षा मनोविज्ञान, प्रो. एस.पी. गुप्ता, शारदा पुस्तक भवन, इलाहबाद, 2014
2. शैक्षिक तकनीक एवं कक्षा-कक्ष प्रबन्धन, डॉ. सन्दीप शर्मा, डॉ. अमित पारीक जयपुर
3. शैक्षिक नीतियाँ विद्यालय नेतृत्व एवं प्रबन्धन, पूनम मदान, अग्रवाल पब्लिकेशन्स, 2008
४. शिक्षा का समाजशास्त्र, डॉ. उषा मिश्रा, अनुभव पब्लिशिंग हाऊस
५. अध्यापक शिक्षा, जी.सी.भट्टाचार्य, अग्रवाल पब्लिकेशन्स, आगरा
६. मनुस्मृतिः, टीकाकारः श्रीगणेशदत्त-पाठकः, श्रीठाकुर प्रसाद पुस्तक भण्डार, वाराणसी, 2002



# तन्त्रागमीयशिक्षादर्शने शिक्षायाः उद्देश्यानि

**डॉ. प्रवीणमणित्रिपाठी***

निखिलं खल्वागमतन्त्रं शिक्षाशास्त्रीयानुशासनप्रतिपादकम्। तन्त्रागमे सम्यग्दर्शन-ज्ञान-चारित्र्यसिद्धि हेतवे ज्ञानयोगक्रियाचर्याश्चेति चत्वारः पादाः विहिताः सन्ति। तत्र सम्यग्दर्शनसिद्धये ज्ञानपादस्य, सम्यग्ज्ञानार्थं योगपादस्य, सम्यक् चारित्रिकविकासाय क्रियाचर्येति पादद्वौ विहितौ इति।

पादविभागाभावेऽपि शैव-वैष्णव-बौद्धादिषु तन्त्रागमेषु सर्वत्र किल शैक्षिकविषयाः समुपवर्णिताः सन्ति।[1] यद्यपि गुरुतः शास्त्रतश्च प्रातिभं ज्ञानं विशिष्टं स्वीकृतमस्ति तथापि तन्त्रागमेषु गुरोर्माहात्म्यमनुत्तमं लोकोत्तरं सर्वातिशायीति चाङ्गीकृतं वर्तते।

तन्त्रागमेषु बाह्यशुद्ध्यपेक्षया आन्तरिकशुचितायाः चर्चा महनीयतया प्रकीर्तिता। मर्त्यानां चित्तशुद्धिः वाग्शुद्धिः कायशुद्धिश्च शास्त्रेऽस्मिन् सम्यकतया परिकल्पितेति। शुद्धचित्तो पुमाँल्लोके ज्ञानं प्राप्तुं सहजतया संलग्नो भवति। स एव अधिगतं ज्ञानं सम्प्रदातुं च कुशलः भवति। शुद्धे चित्ते हि ज्ञानं चिरं तिष्ठति। शुद्धशरीरे हि शुद्धमनसः विकासोऽपि जायते। तन्त्रागमीयशिक्षायां शारीरिक-मानसिक-बौद्धिकाध्यात्मिकविकासाय च विधयः विहिताः सन्ति।[2] दीर्घायुष्यनैरुज्यपूर्वकं सर्वविधविशुद्धिहेतवे योगाचारस्य प्रावधानं कृतमस्ति। श्रीमदागमाचार्येण ब्रजवल्लभद्विवेदीमहाशयेन प्रतिपादितं चतुर्ब्रह्मविहार-भावनायां मैत्री, करुणा, मुदिता, उपेक्षा चेति चत्वारो मनोभावाः परिगणिताः सन्ति।

तत्र सुखिना सह मैत्री, दुःखतप्तमर्त्येषु करुणायाः प्रकाशनं, पुण्यशीलं दृष्ट्वा प्रसन्नताप्राप्तिः, पापरतानां जनानामुपेक्षा च स्यादिति। एतदर्थं मनसि सततं सद्भावस्योद्रेकार्थं तन्त्रागमोक्तशिक्षाव्यावस्थायां आचारः प्राथम्येन प्रतिपादितः।[3]

---

* सहायकाचार्यः (शिक्षाशास्त्रविभागः), केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीरणवीरपरिसरः, जम्मूः।

1. एक विश्व एक संस्कृति नामके ग्रन्थे "तन्त्रागमीय दर्शन" निबन्धः ले. द्विवेदः ब्रजवल्लभः, पृ. 125, जंगमवाड़ी, वाराणसी
2. तत्रैव पृ. 144
3. तत्रैव पृ. 145

तन्त्रागमशास्त्रसिद्धान्तोऽयमस्ति यत् –**"प्रतिशरीरे बुद्धत्वं वा शिवत्वं वा विद्यमानं भवति, तत्स्वीयप्रयत्नेन जागरितुं शक्यते।"** तन्त्रागमदर्शने **"सत्तर्कस्य स्वानुभवस्य"** च विवेचनं वर्तमानशिक्षापरकं वर्तते। मालिनीविजयतन्त्रानुसारेण श्रीतन्त्रालोकमते च योगस्य षडङ्गेषु तर्कः श्रेष्ठतमः स्वीकृतः।

तन्त्रागमशास्त्रस्य शैव-वैष्णवशाक्तबौद्धादिषु शाखासु योगागमस्य प्राणायाम-प्रत्याहार-ध्यान-धारणा-समाधि-तर्काणाञ्चेति षडङ्गानां वर्णनं कृतमस्ति। एतेषु तर्कप्रवणतायाः स्थानम् उच्चतमम् अभिमतम्।[1]

किरणागमस्य मतस्य स्थापनां कुर्वन् श्रीतन्त्रालोके प्रतिपादितं यत् – ज्ञानं (शिक्षा) त्रिविधेन करणेन प्राप्यते – **"गुरुतः शास्त्रतः स्वतश्चेति।"** तत्र त्रिषूत्तरोत्तरं श्रेष्ठमङ्गीकृतमिति।[2] श्रीतन्त्रालोकानुसारेण व्यक्तिषु तार्किकबुद्धेः विकासः निश्चयेन भवेत्। सत्तर्केणैव समस्तं शास्त्रं (ज्ञानं) प्राप्तुं शक्यते। यः सत्तार्किको भवति स सदाचारपरायणोऽपि भवेदिति।[3] शब्दविज्ञानस्य विशिष्टं चिन्तनं स्वच्छन्दतन्त्रे विहितमस्ति। तत्र अष्टप्रकारेण शब्दस्वरूपविचारः प्रकीर्तितः।[4] भाषाविषयकं ज्ञानम् आचारविचारविषयकं चिन्तनं च तन्त्रागमदर्शनेषु विस्तृतं कृतमस्ति।

बालकानां व्यक्तीनां वा भौतिकाध्यात्मिकविकासप्रक्रिया दीक्षादिना सञ्चालिता भवति। शैक्षिकोद्देश्यमभिलक्ष्य तन्त्रागमशिक्षापद्धतौ उद्देश्यद्वयं, ज्ञानात्मकं क्रियात्मकञ्चेति।

**ज्ञानात्मकोद्देश्यानि** –

1. सृष्ट्युत्पत्तिविज्ञानस्यावबोधः।[5]
2. शिवष्णुशक्तिप्रभृतीनां परमतत्त्वानां ज्ञानावाप्तिः।[6]

---

1. यस्य स्वतोऽयं सत्तर्कः सर्वत्रैवाधिकारवान्। ले.श्रीमद् अ.गु.पा., श्रीतन्त्रालोके अ.4, श्लोकः 42
2. किरणायां यदप्युक्तं गुरुतः शास्त्रतः स्वतः।
   तत्रोत्तरोत्तरं मुख्यं पूर्वपूर्व उपायकः।। श्रीतन्त्रालोके, अ.4, श्लोकः- 44
3. स समस्तं च शास्त्रार्थं सत्तर्कादव मन्यते। श्रीतन्त्रालोके अ.-4, श्लोकः-44
4. घोषो रावः स्वनः शब्दः स्फोटाख्यो ध्वनिरेव च।
   झङ्कारो ध्वङ्कृतश्चौव अष्टौ शब्दाः प्रकीर्तिताः।। स्वच्छन्दतन्त्रे, पटले-2, श्लोकः 6,
5. अकामात्संसृजेत्सर्वं जगत्स्थावरजङ्गमम्।
   स्वतेजसा वरारोहे व्योमसंक्षोभ्य लीलया।। स्व.तन्त्रे, पटले-11, श्लोकः3
6. आत्मतत्त्वे तु वै ब्रह्मा मायान्ते च व्यवस्थितः।
   विद्यातत्त्वे तथा विष्णुर्यावत्सादाख्यगोचरम्।।
   शिवतत्त्वे तथा रूद्रो विज्ञेयस्तु वरानने।
   सादाख्यमूर्ध्वमध्वानं सर्वं व्याप्य व्यवस्थितः।। स्व.त. प. 11, श्लोकः 49-50

3. सूक्ष्मातिसूक्ष्मभौतिकतत्त्वानां ज्ञानम्।[1]
4. पतिपशुपाश इति तत्त्वत्रयाणां परिज्ञानम्।[2]
5. इच्छाज्ञानक्रियाशक्तीनामनुभूतिः अवबोधश्च।[3]
6. बुद्धेर्गुणानामवबोधः।[4]
7. सात्त्विकराजसतामसज्ञानस्य तत् स्वरूपस्य च परिचयप्राप्तिः।[5]
8. धर्मज्ञानैश्वर्यवैराग्याणां ज्ञानम्।[6]
9. परमेश्वरस्य सर्वकर्तृत्वस्याभिज्ञानम्।[7]
10. कालस्वरूपज्ञानम्।[8]
11. दीक्षाविधिज्ञानम्।[9]

---

1. बुद्धितत्त्वादहङ्कारः पुनर्जातस्त्रिधा प्रिये।
सात्त्विको राजसश्चैव तामसश्च प्रकीर्तितः।
भूतादि वैकृतश्चैव तैजसश्च त्रिधा स्थितः।
तन्मात्राण्यथ भूतादेस्तेभ्यो भूताव्यजीजनत्।।
शब्दः स्पर्शः.................तन्मात्राणि क्रमेण तु।। स्व.त., प.-11, श्लोकाः - 65-67
2. पतिरिति शिवः, पशुरिति जीवः, पाशेति जीवस्यान्तःकरणे निहिताज्ञानम्। यदा जीवः पतिपशुपाशेति तत्त्वत्रयाणां ज्ञानं प्राप्नोति स शिवत्वं लभते शाश्वतं सुसमेधते च। रुद्रयामलतन्त्रे
3. ज्ञानशक्तिः स्मृतो ब्रह्मा क्रियाशक्तिर्जनार्दनः।
इच्छाशक्तिः परो रुद्रः स शिवः परिगीयते।। स्वच्छन्दतन्त्रे, प.-11, श्लोकः-52
4. धर्मो ज्ञानं च वैराग्यमैश्वर्यं च चतुर्थकम्।
अधर्मं च तथा ज्ञानमवैराग्यमनैश्वरम्।।
अष्टावेते समाख्याताः बुद्धेर्धर्मादयो गुणाः। स्वच्छन्दतन्त्रे, प.-11, श्लोकः - 137,138
5. तत्रैव, श्लोकः - 142
6. धर्मश्च दशधा प्रोक्तो ज्ञानं चौवाष्टधा स्मृतम्।
वैराग्यं नवधा चौवमैश्वर्यं चाष्टधा विदुः।।
..........................................
ऐश्वर्यमष्टधा चौव कथितं तु वरानने। तत्रैव, प.-11, श्लोकाः - 143-150
7. ईश्वरे च ध्रुवे स्थिताः। स्व.त., प.-11, श्लोकः - 184
ईश्वराधिष्ठितं देवि नियत्यादण्डकाहतम्।। स्व.त., प.-11, श्लोकः - 187
8. कालो वै कलयत्येनं तुट्यादिप्रलयावधिः।
नियतिर्निश्चितं नित्यं योजयेच्च शुभाशुभे।। स्व.त., प.-11, श्लोकः-99
9. नास्ति दीक्षासमो मोक्षः न विद्या मातृका परा।
न प्रक्रियापरं ज्ञानं नास्ति योगस्त्वलक्षकः।। स्व.त., प.-11, श्लोकः - 199

12. शिष्यस्वभावज्ञानम्।
13. गुरोः स्वरूपस्य अभिज्ञानम्।
14. सामाजिकमूल्यानामवबोधः।
15. वैयक्तिकोत्त्कर्षकारकमूल्यानां ज्ञानावाप्तिः।[1]
16. नैतिकाचाराणां ज्ञानम्।[2]
17. चारित्रिकमूल्यानामभिवर्द्धनम्।[3]
18. पर्यावरणीयतत्त्वानां परिज्ञानम्।[4]
19. आध्यात्मिकमूल्योपस्थापकव्यवहाराणामर्जनम्।
20. मानवीयमूल्यानां संरक्षणोपायानामर्जनम्।
21. आगतन्त्रोक्तभौतिकाध्यात्मिकतत्त्वानां ज्ञानम्।
22. योगविद्यावैशिष्ट्यपरिज्ञानम्।[5]
23. यन्त्ररचनाप्रकारज्ञानम्।[6]
24. शिल्पकलादीनां ज्ञानम्।[7]

एवं प्रकारेण विविधानि ज्ञानात्मकोद्देश्यानि तन्त्रागमदर्शने अन्तर्निहितानि सन्ति।

---

1. तस्माच्छरीरं संरक्ष्य नित्यं ज्ञानं प्रसाधय।
मानुषं ज्ञाननिकरं ज्ञानात्मानं परं विदुः।। रूद्रयामले प्र.पटले, श्लोकः- 158
2. रुद्रयामले, प्रथमपटले, श्लोकाः - 224-244
3. रुद्रयामले, प्रथमपटले, श्लोकाः - 224-244
4. नानाविधानि देवेश औषधादीनि यानि च।
.........................रसभस्मादिसाधनम्।। रूद्रयामले, प्रथमपटले. श्लोकः -74-75
5. योगशिक्षानिविष्टाङ्गो यतिर्योगपरायणः।
सर्वकालं च कर्त्तव्यो भोगः सर्वसुखप्रदः।।
वाच्छाकल्पतरूं नित्यं तरुणं पातकापहम्।। रुद्रयामले, प्रथमपटले, श्लोकः- 137, 138
6. तन्त्रागमेषु विविधानि यन्त्राण्युपस्थापितानि, तेषां रचनाकारप्रकाराश्चविमर्शिताः। तत्र शाक्तागमोक्तं "श्रीयन्त्र" सुप्रसिद्धम्।
7. वैखानसागमे शिल्पकलादीनां देवालयादीनां वर्णनं सुष्ठुतया प्रकीर्तितम्।
वैखानस आगमः एक अध्ययन, ले.-पाण्डेय, प्रसादः, शीतला, कलाप्रकाशन, न्यू साकेत कालोनी, वाराणसी, वर्ष-2011

**क्रियात्मकोद्देश्यानि** –

तन्त्रागमेषु सर्वाः क्रियाः आदर्शभूताः सन्ति इति ज्ञायते। **"रत्नत्रयपरीक्षा"** इत्याख्ये ग्रन्थे प्रतिपादितमस्ति यत् परमेश्वरशिवस्य द्वे समवायिन्यौ शक्ति विद्येते। तौ च ज्ञानक्रिये इति। आद्याशक्तिः संविद्विज्ञानरूपा द्वितीया क्रियाशक्तिश्च कुण्डलिनीरूपा इति। स्वयं स परमेश्वरः ज्ञानशक्त्या सर्वं विजानाति, क्रियाशक्त्या च यच्चयावज्जगत्कुरुते। एतदर्थं क्रियायाः महत्त्वं प्रदर्शयन तत्र प्रतिपादितं यत् कुलालादीनामपि क्रियाशक्तिरेव प्रयत्नात्मिका घटाद्युत्पादनरूपं फलमावहति। ज्ञानशक्तिस्तु तत्तदर्थविषयीकरण एव चरितार्था। ततः शिवोऽपि ज्ञानशक्त्या विजानन् क्रियाशक्त्या सर्वं करोतीति। एतावता तन्त्रागमे क्रियात्मकोद्देश्यानां स्वरूपं प्राप्यते। तद्यथा –

तन्त्रागमाभिमतानि शिक्षायाः क्रियात्मकोद्देश्यानि –

1. दीक्षानुशासनपालनम्।
2. गुरौ ईश्वरभावस्याभ्यासः
3. आश्रमनियमाचारादीनां पालनम्
4. शिष्यकर्तव्यावबोधस्य विकासः
5. यौगिकक्रियाकलापादीनामभ्यासः तत्पालनञ्च
6. श्रवण-मनन-निदिध्यासनानामभ्यासः
7. गुरोरुपासनायाः उद्देश्यम्
8. ईश्वरप्रणिधानस्याभ्यासः
9. परिग्रहपरित्यागस्याभ्यासः
10. आगमिकधर्माचाराणां पालनम्
11. योगक्रियाक्रीडादीनाञ्चाभ्यासः
12. भौतिकाध्यात्मिकमूल्यसंरक्षणोपायाः
13. यन्त्र-स्थापत्य-शिल्प-कला-सङ्गीतादिज्ञानानां विकासः
14. शमादिनियमानामनुसरणम्

इत्येवं भूतानि क्रियात्मकोद्देश्यानि तन्त्रागमदिशा भवितुमर्हन्ति।

क्रियात्मकोद्देश्येप्रमुखतया चत्वारि उद्देश्यानि अपि भवितुमर्हन्ति –

क. ज्ञानात्मकं दार्शनिकं वा तत्त्वान्वेषणस्योद्देश्यम्।

ख. यौगिकक्रिया द्वारा शारीरिक–मानसिक–बौद्धिक–आध्यात्मिकविकासस्य चोद्देश्यम्।

ग. वैयक्तिक–सामाजिक–भौतिक–सांस्कृतिक–वैश्विकाभ्युदयनिमित्तं उपासना पूर्वकं सर्वाभ्युदयस्योद्देश्या।

घ. आगमतन्त्रोक्तविशिष्टसाधनापद्धतीनां संरक्षणम्सामाजिकाचारविचारनियमानां पालनञ्चेति।

तन्त्रागमानां चान्तिममुद्देश्यं मोक्षावाप्तिरेवास्ति। अतः सर्वविधज्ञानं प्राप्य सर्वतत्त्वेषु एको हि परमेश्वरः निगूढः इति मत्त्वा सर्वत्र सर्वतत्त्वेषु परमेश्वरतत्त्वभानं परमेश्वरे च सर्वतत्त्वानामन्तर्भावः आकलय्य आत्मनो परमेश्वरस्य चौकात्म्यभावस्य विकासः तन्त्रागमानां चरमोद्देश्यं वर्तते। तत्र विविधदार्शनिकप्रश्नानां समाधानपूर्वकं चरमसत्तायाः विमर्शः प्रतिपादितः। विशेषतया तन्त्रागमीयं ज्ञानं खलु आनुभविकं ज्ञानं वर्तते। शासनेऽस्मिन् गुरुणा दीक्षानुशासनं नैकनिर्दुष्टक्रियाव्यापारैः शिष्यः शिक्ष्यते। योगमार्गमनुसरन् मनसः बुद्धेः तन्मात्रायाः आत्मनः ईश्वरीयसत्तायाश्चानुभविकं ज्ञानं प्राप्यते। एतावता वक्तुं शक्यते यत् तन्त्रागमीयायां शिक्षायां छात्राणां कौशलात्मकविकासे विशेषो ह्यवधानं प्रदीयते इति।

**सन्दर्भ ग्रन्था–**


* श्रीतन्त्रालोकः, सं. प्रकाशन विभागः, सम्पूर्णानन्द सं.वि.वि., वाराणसी–2008।
* स्वच्छन्दतन्त्रम्, सम्पूर्णानन्द सं.वि.वि., वाराणसी, 2007।
* एक विश्व एक संस्कृति, द्विवेदः, ब्रजवल्लभः, जंगमवाड़ी, वाराणसी–2005।
* शाक्तानन्दतरङ्गिणी, सं. त्रिपाठी, राजनाथः, सम्पूर्णानन्द सं.वि.वि., प्रकाशन विभागः, वाराणसी–2002।
* लुप्तागम संग्रहः, कविराजः, गोपीनाथः, सं.सं.वि.वि., प्रकाशन विभागः, वाराणसी।
* आगमतत्त्वविमर्श, विवेदः, ब्रजवल्लभः, विश्वविद्यालय प्रकाशन, वाराणसी–2009
* चण्डी पत्रिका, अलोपी बागः, इलाहाबाद, 2006–7।
* रुद्रयामलतन्त्रम्, त्रिपाठी, रामप्रसादः, सं.सं.वि.वि., वाराणसी–1998।
* वैखानस आगम, एक अध्ययन, पाण्डेयः, प्रसादः, शीतला, कला प्रकाशन




# औपनिषदिकवाङ्मयेषु उपनिबद्धाः प्रभावपूर्णशिक्षणकौशलस्य परियोजनाः

**लोपामुद्रा गोस्वामी** *

प्रस्तावितं शोधपत्रमौपनिषदिकसाहित्ये पाठनशैली कीदृशी आसीदित्यनेन सम्बद्धं वर्तते। पुराकालाद् भारतीयशिक्षाव्यवस्था आधुनिकशिक्षादिशा विकसिता आसीत्। एवम् आधुनिकशिक्षाविद्भिः 'pragmatism', 'behaviorism', 'principle of learning by doing', 'principle of life experience', 'principle of concrete to abstract', 'principle of democratic dealing' इत्यादि ये शिक्षणोपागमा आलोचिताः तेषामुपयोगः वैदिककालीनसमाजे अध्ययन-अध्यापनेऽपि आसीत्। तासां नीतिनां प्रयोगस्तु वैदिक-मन्त्रोच्चारणसमये, छान्दोग्योपनिषदि नारद-सनत्कुमाराख्याने, आरुणि-श्वेतकेतुसंवादे, न्यायदर्शने प्रमाणमीमांसायां, चतुर्णां महावाक्यानामवगमने च दृश्यते। तस्मात् ज्ञायते यत् वेदेषु विविधविज्ञानप्रज्ञानविषयाः तु विहिताः सन्त्येव उत शिक्षणकौशलाः, सम्प्रेषणकलाः इत्यादि- व्यवहारिकज्ञानानामपि संज्ञा उपलब्धा अस्ति। एवमनेन शोधपत्रेण अस्माकं गरिमामयप्राचीनशिक्षायाः पाठन-पठनकौशलकलाः वैदिकसाहित्यदिशा आलोचयितुं प्रयत्यते।

**कूटशब्दाः**- *उपनिषद्, शिक्षणकौशलम्, सम्प्रेषणकला*

**प्रस्तुताध्ययनस्य क्षेत्रं प्रासङ्गिकता च**- वैदिकशिक्षा भारतीयसंस्कृतेः परम्परायाश्च मुख्या धारा अस्ति। वैदिकशिक्षा सम्प्रति उपलब्धानां सर्वासां समस्यानां समाधानमस्ति। यतोहि तस्मिन्समयेऽपि शिक्षा इयं छात्राणां दैहिक-मानसिक- नैतिक-आध्यात्मिकादि-प्रमूल्याणामवबोधने समर्था आसीत्। एतेषाम् अङ्गानां चर्चा कथं करणीया इत्यादि कौशला अपि तत्र सुष्ठु उपलभ्यन्ते। एतानि कौशलानि के इति मया आधुनिकसंज्ञादिशा आलोच्यते। इतोऽपि आधुनिकी शिक्षारीतिः सामान्यविषयमेव अवबोधयितुम् असमर्थोऽस्ति। परन्तु उपनिषत्सु प्रज्ञानरूपं कठिनतमं विषयमतिक्रमबद्धतया वर्णितम्। प्रायः असकलानु-भवमोक्षविषयमुपस्थापने केषां कौशलानां प्रयोगोऽक्रियत तेषामुपरि आलोचना अत्र मया कृता।

* शोधच्छात्रा, कुमारभास्करवर्मसंस्कृतपुरातनाध्ययनविश्वविद्यालयः, असमः।

**शोधप्रश्नाः-**

1. कथं वैदिकीशिक्षा आधुनिकीसमस्यानामपि समाधानं करोति?
2. आधुनिकीशिक्षाकौशले वैदिकपद्धत्याः प्रभावः?
3. किमर्थम् औपनिषदिकशिक्षा प्रभावपूर्णतमा?
4. प्राचीनशिक्षापद्धत्यां नियोजनसौविद्ध्यं किदृशमासीत्?

**शोधप्रविधिः-** शोधकार्यमिदं मौलिकशोधप्रविधिना प्रवर्तिष्यते। अत्र वैदिकशिक्षा-आधुनिकशिक्षा-इत्युभयोः शिक्षणकौशलानाम् अध्ययनसमये वर्णनात्मकविश्लेषणात्मक-तुलनात्मकपद्धतिराधारीक्रियते। उपलब्धप्राथमिकद्वितीयस्त्रोतसामाधारेण कार्यमिदं सम्पादिष्यते। प्राथमिकस्त्रोतस्तु दशमुख्योपनिषदाधारेण साधितं भविष्यति। द्वितीयस्त्रोतांसि च सहायक-शिक्षाशास्त्राणि, अन्तर्जालीयस्त्रोतांसि च भविष्यन्ति।

**प्राक्कथनम्-** शिक्षणम् इति एका कला वर्तते। पाठ्यं सुगमतया उपस्थापयितुं शिक्षकः यान् प्रविधीन् प्रयुज्यते तान् शिक्षणकौशलं नाम्ना अभिधीयते। आधुनिककाले शिक्षाशास्त्रे शिक्षावैज्ञानिकैः प्रभावोत्पादक-शिक्षणाय नैकानि माध्यमानि प्रदत्तानि। तेष्वधिकानि कौशलानि वैदिककालादेव अस्मद्देशे प्रचलितानि आसन्। पुराकालादेव भारतीयशिक्षाव्यवस्था साम्प्रतिककालदृशा क्रियात्मका विकासात्मिकाश्च आसीत्। क्रियामुखि अस्माकं एतत् पुरातनशिक्षणकौशलं लक्षवर्षानन्तरं 'Frobel' इति शिक्षावैज्ञानिकेन 'Learning by doing' इत्यनेन स्वमतमुपस्थापितम्। पाश्चात्यपण्डिताः यान् उपायान् श्रेष्ठतररूपेण अघोषयन्, तेषामभ्यासस्तु प्राच्ये भारतवर्षे पुराकालादेव प्रचलति। विशेषतः प्रभावशाली-पठनशैली संस्कृतवाङ्मये पुराणेषु उपनिषत्सु अधिकतया दृश्यते। यतोहि तेषां ग्रन्थानां संकेटीकरणमेव पाठनरीत्या जायते। प्रायशः तेषु ग्रन्थेषु दृश्यते यत् शिष्याः गुरोः आत्मविदो वा समीपे गत्वा स्वजिज्ञासामुपस्थापयन्ति, गुरुरूपः सः परमर्षिः प्रभावपूर्णतया भिन्नशैल्या ताः जिज्ञासाः निराकरोति।

प्राचीनभारतीयशिक्षाव्यवस्था द्विधा विभक्ता आसीत्- औपचारिक-अनौपचारिक-पद्धती। औपचारिकशिक्षा मन्दिर-आश्रम-गुरुकुलादिषु प्रचलिता आसीत्, यानि पश्चाद् उच्चशिक्षायाः केन्द्राणि अभवन्। अन्ये ये गृहे एव स्थित्वा मात्रा पित्रा ज्ञानमलभन् ते अनौपचारिकशिक्षया पठनरता आसन्। एवम् औपचारिक-अनौपचारिकशिक्षाया अवधारणा तु पूर्वादेव प्रचलिता आसीत्। अस्याः शिक्षापद्धत्याः पाठ्यक्रमोऽपि बहुमुखी, कार्यान्वेषी, वृत्तिमुखी च आसीत्। पाठ्यक्रमे मूलत आध्यात्मिकविद्या, वेदाध्ययनम्, व्याकरणम्, कल्पविद्या, नक्षत्रविद्या, चिकित्साविद्या, कृषिविद्या, गन्धर्वविद्या, चतुर्षष्ठीकलादयः अन्तर्भूक्ता आसन्। एषु ब्रह्मविद्यामतिरिच्य अन्यविद्याभिः शिष्याः गुरूपदिष्टसंस्कारेण

जीविकानिर्वाहाय निष्काममनोभावेन अर्थोपार्जनमकुर्वन्। अस्मात् पाश्चात्यपण्डितै आक्षिप्यमानः वेदकालीनशिक्षायां नियुक्त्यवसरः नासीदिति आक्षेप अयुक्तिकर इति। तस्मिन्समयेऽपि शिक्षा वृत्तिमुखी आसीत् परन्तु ज्ञानान्वेषणस्य आधिक्यमासीत्।

प्राचीनशिक्षापद्धतीं प्रधानतः मन्त्रकालीन-ब्राह्मणकालीन-आरण्यककालीन-औपनिषदिककालीनरूपेण चतुर्धा विभक्तुं शक्नुमः। आरण्यकपर्यन्तं वैदिकशिक्षा मनस्तात्त्विकम् एवम् आध्यात्मिकमासीत्। जनाः केवलम् अतिवृष्टि-अनावृष्ट्यादि-दुःखत्रयस्य उच्छेदे रता आसन् अतएव उपासनादि धार्मिकाभिव्यक्तिः सर्वाङ्गीन्विकासे व्यर्था आसीत्।

**औपनिषदिकशिक्षा**- औपनिषदिकशिक्षा आसीत् प्राचीनशिक्षाव्यवस्थायाः विवर्तनयुगा। अस्मिन्नेव समये प्रारभ्यते छात्राणां मनस्तात्त्विक-धार्मिक-आध्यात्मिक-प्रगतिशीलशिक्षायाः या शिक्षा सुव्यवस्थित-सुपरिकल्पित-मनोवैज्ञानिकी आसीत्। औपनिषदिकशिक्षा कीदृशी लाभदायिनी आसीत् तत्तु उपनिषद् शब्देन एव ज्ञायते। गुरोः समीपे गत्वा बाह्यवस्तोः अवरोधनात् दूरे गुरुमनुकृत्य इन्द्रियाणां नियन्त्रणे सति एकाग्रतया यमध्येति सा पठनरीति एव दीर्घस्थायीनि भवति। एतां शिक्षाव्यवस्थां भृङ्गीकृतन्यायेन वयम् अभिधातुं शक्नुमः। यथा भृंगीकीटः किमपि कीटं यदि दंशयति तर्हि सः भिन्नकीटोऽपि पश्चाद् भृङ्गीवद् आचरति। तथैव प्राचीनशिक्षाव्यवस्थायामपि गुरुः साध्वाचरणं भृङ्गीवत् शिष्यं प्रति आचरति। अतएव प्राचीनकाले गुरोः कृते आचार्यशब्दस्य सम्बोधनम् आसीत्। आचारं ग्राहयति आचिनोति अर्थान् आचिनोति बुद्धिम् इति वा।[1] औपनिषदिकशिक्षायाः पाठ्यक्रमस्य पठनशैली अपि भिन्ना आसीत्। अतएव आत्मविद्या सदृशा कठिनतमा निस्पृहा विषया अपि सुकरा जायते। अस्यां वर्णनाशैल्यां लोककथाः, लौकिकोदाहरणानि, लौकिकन्यायाः, प्राकृतिकस्थावरवस्तुनां मानवीयकरणादि कौशलानि दरीदृश्यन्ते। साधारणतः विषयवस्तूनि आक्षेप-समाधनतया कुत्रचित् छात्रैः जिज्ञास्यमानैः प्रश्नैरपि विषयवस्तूनि प्रारभ्यन्ते। छान्दोग्योपनिषदि अष्टमाध्याये नारदवर्यः सनत्कुमारसमीपे पराविद्याग्रहितुं यदा गतवान् तदा सनत्कुमारः नारदं सः पूर्वे के के विषयाः तेन अधीता इति अपृच्छत्। तत्पश्चात् एव सनत्कुमारः तं नारदं ज्ञातविषयतः अज्ञातविषयं प्रति नयति। आधुनिककालेऽपि शिक्षकाः एवमेव पद्धत्या पठनीयम् इति 'known to unknown' इति कौशलं निरूपयन्ति। इतोऽपि सनत्कुमारः नारदं प्रथमे एव मूलभूतभूमाख्यं तत्त्वं न विज्ञापयति प्रथमे साधारणतः असाधारणाज्ञाततत्त्वं प्रति नयति यस्माद् भ्रान्तिः नोत्पद्यते उत इतोऽपि किमपि अवशिष्टमस्ति

---

1. तैत्तरीयोपनिषद्, शिक्षावल्ली, अनुवाक 11, पृष्ठा 942

इति जिज्ञासा अपि न भवेत् इति व्यवस्था कृता। तादृशी एव व्यवस्था सम्प्रति शिक्षावैज्ञानिकैः 'simple to complex' 'particular to general' इति नियमः कृतः। एषा व्यवस्था सोपानारोहणवदिति शाङ्करभाष्ये अभिहिता। प्रथमे एव मूलवस्तु नोक्त्वा अन्यनिकृष्टतत्त्वानामुल्लेखनेन नेति नेति इदम् एवम् अनिष्टवस्तुनां खण्डनेन विश्लेषणम् उपनिषत्सु प्राप्यते।

इतोऽपि छान्दोग्योपनिषदि आरुणिः श्वेतकेतुं सुषुप्तावस्थायां जीवस्वरूपः कीदृशः इति अवबोधनसमये नैकानि उदाहरणानि उल्लेखयति। पाठने दृष्टान्तस्य प्रयोगः अत्यावश्यको भवति। दृष्टान्तेन छात्रमनसि विषयवस्तुनः गम्भीरालोकनं भवति। अतएव दृश्यते छान्दोग्योपनिषदि कठिनतमं 'तत्त्वमसि' इतिमहावाक्यं मधुमक्षि-नदी-न्यग्रोधफलादि भिन्नदृष्टानेन अवबोध्यते वारं वारम्। सोदाहरणं विषयवस्तुनः पुनरावृत्तिः प्राचीनशिक्षा-व्यवस्थायाः अन्यतमलक्ष्यम् आसीत्।

इतोऽपि छान्दोग्योपनिषदि जगतः कारणं सत् अस्ति वा न इति लवणदृष्टान्तेन अवबोधितम्। तदर्थं तु श्वेतकेतुं एकस्मिन् चषके जले लवणं मिश्रणं कृत्वा स्थापयितुम् आदिदेश तथैव आगामिनी दिनाङ्के तस्य परीक्षणमपि कर्तुम् उपदिशति। तस्मिन् जले सन्निहितलवणवदेव जगतः कारणं सत् इति पाठयति। एवं सा एव प्रक्रिया परवर्तीकाले शिक्षाविदः 'concrete to abstract', 'actual to representative', 'Empirical to rational', psychological to logical' इत्यनेन अभिधीयते। इतोऽपि औपनिषदिकशिक्षा क्रियामुखी अपि आसीत् लवणदृष्टान्तः तस्यैव उदाहरणमस्ति। आधुनिककालवत् तस्यां शिक्षाव्यवस्थायामपि 'principle of learning by doing' 'principle of interest', 'principle of life experience', ' principle of repetition and exercise' इत्यादि नीति- निर्देशना आसीत् अतएव एषा शिक्षाव्यवस्था फलप्रदा आसीत्।

**उपसंहारः**- अस्माकं पुरातनशिक्षाव्यवस्था बहुमुखी अपि आसीत्। पाठनादुपरि नित्यनैमित्यिककर्ममाध्यमेन तेषां शारीरिक-मानसिकादीनामपि विकास अभवत् इतोऽपि अन्यैः छात्रैः सह वासे तेषां सामाजिक-नेतृत्वादिगुणानामपि विकासः अभवत्। इतोऽपि वैदिकीशिक्षा नैतिकप्रमूल्यानि चर्चितवन्तः अतएव तस्मिन्समये नैतिकावक्षयस्य समस्या नासीत्, अतएव तादृशी नैतिकशिक्षा अधुना अत्यावश्यकी परिगण्यते। इतोऽपि हस्तसञ्चालनेन वैदिकमन्त्रोच्चारणं छात्राणाम् एकाग्रतां वर्धयते। अपि तु एकस्मिन् समये बहुविषयेषु ध्यानं दत्ते सति मष्तिस्कम् अधिकाधिकं सक्रियं जायते। इतोऽपि श्रवण-मनन-निदिध्यासनेन कथं पठनीयमित्यपि उपनिषत्सु वारं वारम् आलोचितम्। अतएव वैदिकी शिक्षा केवलं पारायणजन्यमेव आसीत् इति न, तत्र मननेन निदिध्यासनेन वा स्वमतोपस्थापनावसरः अपि आसीत्। पुनः स्वाध्यायः, पुनरावृत्तिः तथा पारायणपरम्परा

तु उत्कृष्टा परम्परा आसीत् तस्मिन्समये। उच्यते च आवृत्तिः सर्वशास्त्राणां बोधादपि गरीयसी[1] इति, तस्माद् शास्त्रप्रवेश अपि भवति इतोऽपि पौनःपुन्याभ्यासेन संस्कारवशाद् अवगमनेऽपि सौविध्यं भवति। तथा च अस्यां शिक्षाव्यवस्थायां केवलं गुरोः भूमिका महत्त्वपूर्णा आसीत्। आचार्या अपि छात्राणां सकलदुर्बलसबलदिशां ज्ञात्वा परामृशन्ति। पितृस्वरूपवदासीत् गुरोः भूमिका। अतएव सनातनसंस्कृतौ आचार्यदेवो भव[2] इति वाणी प्रसिद्धा। एवम् अस्माकं प्राचीनशिक्षणकौशलानि जनहिताय समाजहिताय देशहिताय आसन्। अतएव आधुनिककालेऽपि एतादृशी शिक्षाव्यवस्था भवेत् यस्मात् भारतवर्षस्य नैतिक- आध्यात्मिकप्रमूल्यैः आधुनिकसमस्यानामपि समाधानं कर्तुं समर्था भवामः।

**प्राथमिकस्त्रोतांसि-**

1. गोयन्दका हरिकृष्णदास (सं. 2034) ईशादि नौ उपनिषद्, गीताप्रेस, गोरखपुर।
2. झाँ गंगानाथ (1942) द छान्दोग्योपनिषद्, ओरियंटल बुक एजेंसी, पूना।

**द्वितीयकस्त्रोतांसि-**

1. जफर एम.डी. (1948) शिक्षा-शास्त्र, किताब महल इलाहबाद, इलाहाबाद
2. वर्मा वैद्यनाथ प्रसाद, शिक्षाशास्त्र, बिहार हिंदी ग्रंथ अकादमी पटना, पटना।
3. राजवडे वि.के. (1940), निरुक्तम्, भण्डारकर ओरिएंटल रिसर्च इंस्टीट्यूट, पूना।

**आर्न्तजालीयस्त्रोतांसि-**

1. https://www.linkedin.com/pulse/methoods-teaching-vedic- education-dr-aniket-srivastava
2. https://www.google.com/search?q=effective+teaching+in+vedas&oq=effective+teaching+in+vedas&aqs=chrome..69i57j33i160.8243j0j7&client=ms-android-asus-tpin&sourceid=chrome-mobile&ie=UTF-8



---

1. http://subhashita-deepashikha.blogspot.com/2018/05/24.html?m=1
2. तैत्तरीयोपनिषद्, शिक्षावल्ली, अनुवाक 11, पृष्ठा 942

# वाक्यविज्ञानम्

- कृष्णगोपालपात्रः *

**कूटशब्दाः**- वाक्यम्, पदम्, पदसमूहः, वर्णः, भाषाविज्ञानम्।

**1. उपोद्घातः**

'वाचामेव प्रसादेन लोकयात्रा प्रवर्तते' इति अभियुक्तवचनात् ज्ञायते भाषा एव लोकचालिका। भाषा एव मानवजीवनस्य सारभूतः रस इति उपनिषदि अपि आम्नातम्- 'पुरुषस्य वाग् रसः, वाच ऋग् रसः' इति। वर्णमेलनेन शब्दः पदं वा जायते। पदानां च मेलनेन वाक्यं जायते। वाक्यविज्ञाने वाक्यस्य भाषावैज्ञानिकदृशा विवेचनं विधीयते। वाक्यस्य संरचनं तु सार्थकपदैरेव। वाक्यं भाषायाः अत्यन्तं महत्त्वपूर्णो विषयः। केषांचन मते वाक्यस्य एव प्रमुखता केषाञ्चन च मते पदस्येति। आधुनिका अपि विद्वांसः एवं मन्यन्ते यत् भाषायां वाक्यमेव मुख्यं तद्द्वारैव सूक्ष्मातिसूक्ष्मं विवचनं विधीयते। वाक्यम् इति श्रवणेन मनसि प्रश्नः स्यात् यत् पदसमूहः एव वाक्यम् उत येन अर्थप्रतीतिः भवति तत् वाक्यमिति। अस्मिन् सन्दर्भे च विदुषां वैमत्यं दृश्यते। वाक्यशब्दस्य प्रयोगः भारतीयशास्त्रीयपरम्परायां हि सर्वत्र लक्ष्यते। वाक्यस्वरूपं विवेचयन्तः पाश्चात्या विद्वांसः क्वचित् भारतीयज्ञानपरम्परया तत्स्वरूपं प्रतिपादयन्ति क्वचिच्च स्वीयशैल्या एव निर्दिशन्ति। संस्कृतस्य भाषाशास्त्रीयं महत्त्वमपि विद्वद्भिः स्वीकृतम्। भाषाविज्ञाने ध्वनिविज्ञानम् अर्थविज्ञानम् वाक्यविज्ञानम् शब्दविज्ञानमिति चत्वारो भेदाः भवन्ति। भाषाविज्ञानस्य आधारः एव संस्कृतभाषा इति विन्टरनित्समहाभागाः अभिप्रयन्ति- "In the earliest ages the Indians already analysed their ancient sacred writings with a view to philology, classified the linguistic Phenomena as a Scientific system and developed their grammar so highly that even today modern Philology, can use their grammar attainments as a foundation.

---

* शोधच्छात्रः, रामकृष्णमिशन्-विवेकानन्दशैक्षणिकशोधसंस्थानम्।

## 2. वाक्यस्वरूपम्

भाषाविज्ञानस्य महत्त्वपूर्णो विषयो भवति वाक्यविज्ञानम्। यच्च आङ्ग्लभाषया सिन्टेक्स् इत्युच्यते। अद्यत्वे वाक्यविषयकं बहुविधं पाश्चात्यमतं प्राच्यमतं च जगति आलोच्यमानं विद्यते। वाक्यं हि वैयाकरणानां प्रमुखो विषयो विद्यते। भाषाया: विचारस्य न्यूनतमं घटकं च वाक्यम् इति पाणिनीयपरम्परा, आधुनिकभाषाविदोऽपि तदनुसारिण:। अष्टौ स्फोटा: वैयाकरणनिकाये प्रसिद्धा:, तेषु च वाक्यस्फोटस्य मुख्यता प्राय: सर्वै: स्वीक्रियते। भाषाया: मौलिकं घटकं हि वाक्यमेव इति विचिन्त्य वाक्यस्फोटस्य मुख्यतोररीकृता। शब्दनित्यत्ववादस्तु वैयाकरणै: मीमांसकैरपि स्वीक्रियते। परं पदविषयका: युक्तय: सप्रमाणं परिहृत्य तत्तच्छास्त्रे वाक्यपक्षोऽपि प्रतिष्ठित:। अर्थात् वाक्यपक्षे वाक्यमेव ध्रुवं कूटस्थं परिणामरहितम् अक्षयम् अवयवरहितं च इति तेषां धी:। पदस्यास्तित्वं तज्ज्ञानं च वाक्यद्वारेणैव अन्वयव्यतिरेकाभ्याम् इति 'अपोद्धारपदार्था ये' इत्यादिकल्पनया तेषां व्यवहार: वाक्यपदीये प्रदर्शित:। विश्वस्य प्राचीनतमो ग्रन्थो हि ऋग्वेद:। वेदे सूक्तानि विद्यन्ते। सूक्तेषु च पुन: ऋच: विद्यन्ते। छन्दोबद्धे ऋग्वेदे वाक्यं नास्तीति सामान्यत: प्रतीयते परं सूक्तलक्षणं प्रतिपादयन् शौनक: ब्रूते बृहद्देवतायां– 'सम्पूर्णमृषिवाक्यं तु सूक्तमित्यभिधीयते' इति तन्नाम ऋषे: वाक्यं सूक्तमिति तस्याभिप्राय:। बृहद्देवतायां वाक्यलक्षणं निगदितं तेन–

**अर्थात्पदं स्वाभिधेयं पदाद्वाक्यार्थनिर्णय:।**
**पदसंघातजं वाक्यं वर्णसंघातजं पदम्॥**

पदसमूहो वाक्यम्। क्वचित् च नामाख्यातोपसर्गनिपातानां संघ: वाक्यम्। उव्वटाचार्य: यजुर्वेदभाष्यस्योपक्रमे वाक्यं निरूपयन्नाह– 'नामाख्यातोसर्गनिपातसमुदायो वाक्यम्, तस्यार्थ: वाक्यार्थ:' इति।

### 2.1. वैयाकरणमतम्

वाक्यस्वरूपविषये वैयाकरणा: मीमांसका: नैयायिका: आलंकारिका: शाक्ता: इतरशास्त्रानुसारिण: अपि विविधं मतं प्रकटितवन्त:। पाश्चात्या अपि श्लाईखर–गार्डिनर–चामस्की–ब्लूमफील्ड–सौस्यूरप्रभृतय: विद्वांस: स्वमतं प्रकटयामासु:। क्वचित् एषां मतैक्यं क्वचिच्च वैमत्यं दृश्यते व्याख्यानपद्धतौ। वाक्यविषयकविचारे भर्तृहरे: अत्यन्तं सूक्ष्मातिसूक्ष्मं विवेचनं दृश्यते। अद्यत्वे भाषाविषयकं समीक्षणं सर्वमपि प्राय: भर्तृहरिप्रोक्तसिद्धान्तै: सह सन्तोल्य विवेच्यते। किञ्च तदीय: भाषावैज्ञानिक: सिद्धान्त: पाश्चात्यपण्डितानाम् अपि अत्यन्तम् अभीष्ट:। अर्थात् तस्यैव मतमिदानीं प्रमाणभूतं जातं जगति। पदं वाक्यादेव विनिर्गतमिति भगवान् भर्तृहरि:। प्राचीनानामाचार्याणां मतानि

समाश्रित्य वाक्यविषयेऽष्टौ पक्षाः तेन निर्दिष्टाः। तथाहि-

**आख्यातशब्दः सङ्घातो जातिः सङ्घातवर्तिनी।**
**एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहतिः॥**
**पदमाद्यं पृथक् सर्वं पदं साकाङ्क्षमित्यपि।**
**वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायवादिनाम्॥**

-वाक्यपदीयम्-2.1-2

तदेवं हरिकारिकामाश्रित्य अष्टौ पक्षाः क्रमादधः निर्दिश्यन्ते-

### 2.1.1 आख्यातशब्दो वाक्यम्

आख्यातशब्दः एव वाक्यमिति प्रथमः पक्षः। आख्यातेन च क्रियापदं बुध्यते। क्रियाहीनं हि वाक्यं क्वचिदपि न श्रूयते तस्मात् क्रियाप्रधानपदं वाक्यमिति फलितम्। तस्य च क्रियापदस्य क्वचित् साक्षात् क्वचिच्च अनुमानेन बोधः। हरिवृत्तौ एतदेव श्रूयते "तस्माच्छ्रूयमाणं क्रियापदं अनुमीयमानं क्रियापदं वा वाक्यमेव सर्वव्यवहारेषूपपद्यते" इति। वर्षति इत्युच्यमाने स्वयमेव इन्द्रः इत्यादिकर्तृकर्मादीनां बोधः अध्याहारात् ज्ञेयः। तथाहि हरिवाक्यं-

**आख्यातशब्दे नियतं साधनं यत्र गम्यते।**
**तदप्येकं समासार्थं वाक्यमित्यभिधीयते॥** -वाक्यपदीयम्- 2.326

### 2.1.2 सङ्घातः वाक्यम्

सङ्घातो वाक्यमिति द्वितीयः पक्षः। एकार्थनिरूपकः पदसङ्घातः इत्यर्थः। पदसङ्घातपक्षे तु पदं प्रथमं सामान्यार्थं बोधयति तदनु समुदाये अन्विते सति विशेषार्थं बोधयति। अस्मिन् च पक्षे पिधेहि इति आख्यातमात्रं न वाक्यं यतो हि अत्र द्वारम् इति क्रियापदस्य अध्याहारो भवति परमत्र सङ्घातो न विद्यते अतः अस्य वाक्यत्वं नास्ति। पिधेहि द्वारम् इति पदद्वयं सम्भूय वाक्यत्वं जनयति। भोजराजकृते शृङ्गारप्रकाशे एतदेव दृष्टान्तेन प्रदर्शितम्- "यथा तत्र यथा त्रयोऽपि ग्रावाणः उखां धारयन्ति, चत्वारोऽप्युदन्तारः शिविकाम् उद्यच्छति, सर्वाण्यपि कारकाणि पाकं साधयन्ति तथा पदान्यपि सर्वाणि वाक्यार्थमन्वगमयन्तीति"। इदं मतं वस्तुतः व्याडेः मतमादायैव निरूपितम्।

### 2.1.3 सङ्घातवर्तिनी जातिः वाक्यम्।

सुबन्तानां तिङन्तानां सङ्घाते विद्यमाना जातिः वाक्यमिति तृतीयः पक्षः। देवदत्त गामभ्याज दण्डेनेति वाक्ये पदसङ्घातरूपे तादृशः कश्चित् जातिविशेषो विद्यते येन

प्रतिपुरुषं प्रत्युच्चारणं प्रतिक्षणं च भिद्यमानेऽपि एकत्वप्रत्यभिज्ञा भवति। परन्तु आनन्त्यव्यभिचारदोषप्रसङ्गात् पदसङ्घाते वाचकत्वं स्वीकर्तुं न शक्यम्। अतः पदसङ्घातगतायाः जातेरेव वाचकत्वं तदीयजातेरेव वाक्यत्वं वक्तुमिचितम्।

### 2.1.4 एकोऽनवयवः शब्दः वाक्यम्

तूरीयपक्षोऽयम्। अस्मिन् मते वाक्यं निरवयवम् एकं पूर्णमविच्छिन्नं च भवति। अवयवादिविवेचनं तु परं क्रियते। चित्रदृष्टान्तेन इदं भर्तृहरिणा सुष्ठु निरूपितम्–

**चित्रस्यैकरूपस्य यथा भेदनिदर्शनैः।**
**नीलादिभिः समाख्यानं क्रियते भिन्नलक्षणैः॥**

**तथैवैकस्य वाक्यस्य निराकाङ्क्षस्य सर्वतः।**
**शब्दान्तरैः समाख्यानं साकाङ्क्षैरवगम्यते॥**

–वाक्यपदीयम्– 2.8–9

अर्थात् किञ्चित् चित्रं वयं पश्यामश्चेत् प्रथमं सम्पूर्णं चित्रमेव अस्माकं दिग्गोचरं भवति तदनन्तरं च अवयवशः। एवमेव वाक्यविज्ञाने अपि प्रथमं सम्पूर्णं वाक्यमस्माकं दिक्पथमायाति तदनु च पदवर्णाद्यवयवरूपेण।

### 2.1.5 क्रमो वाक्यम्

पञ्चमः पक्षश्च क्रमो वाक्यमिति। पदानां विशिष्टक्रमो वाक्यम्। क्रमस्तु कालधर्मः। कालस्य शक्तिविशेषः क्रमः। ध्वनिसङ्घात् पदसङ्घात् योऽर्थः प्रतीयते स क्रमविशिष्टात्। अर्थबोधाय पदानां क्रमोऽपेक्षितः। हरिणा वाक्यपदीये सप्तकारिकाभिः क्रमः निरूपितः।

### 2.1.6 बुद्ध्यनुसंहतिः वाक्यम्

अत्र बुद्धिशब्देन पदबुद्धिरुच्यते, एवञ्च पदबुद्धीनाम् अनुसंहतिः अनुक्रमेण संहृतिः संहारः उपसंहारः, तत्र पदानि न वर्तन्ते, तानि पदबुद्धित्वेन कल्पितानि भवन्ति, पदसमूहत्वं बुद्ध्या कल्पयित्वा वाक्यं व्यवहृयते, तादृशं वाक्यमखण्डं कथ्यते। उक्तं च हरिणा–

**यदन्तः शब्दतत्त्वं तु नादैरेकं प्रकाशितम्।**
**तदाहुरपरे शब्दं तस्य वाक्ये तथैकता॥** –वाक्यपदीयम्– 2.30

शब्दस्य हि रूपद्वयं विद्यते बाह्यमान्तरिकं च। आन्तरिकं च यद्रूपं तन्मुख्यम्। आन्तरिकः शब्दः एकः अखण्डः। बुध्यनुसंहतिः आन्तरस्फोटः इति केषाञ्चन मतम्।

### 2.1.7 आद्यं पदं वाक्यम्

वाक्ये प्राथम्येन उपयुज्यमानस्य पदस्य वाक्यत्वमिति अस्मिन् पक्षे वाक्यलक्षण-मायाति। एवञ्च प्राथम्येन उपयुज्यमानेन पदेन अन्येषामाक्षेपः क्रियते। प्रथमं तु कारकं क्रियापदं वा प्रयुज्यते। तदनु साहचर्यात् प्रथमं प्रयुक्तं पदं स्वार्थप्रतिपादनाय पदान्तरमाक्षिपति। प्रोक्तञ्च-

**विशेषशब्दाः केषाञ्चित् सामान्यप्रतिरूपकाः।**
**शब्दान्तराभिसम्बन्धात् व्यज्यन्ते प्रतिपत्तिषु॥**

-वाक्यपदीयम्- 2.17

### 2.1.8 पृथक् पदं सर्वं साकाङ्क्षं वाक्यम्

वाक्यात् पृथक्करणे पदान्तरसाकाङ्क्षं सर्वं पदमर्थात् आद्यं मध्यमन्त्यं च समुदितं वाक्यम्। अर्थात् प्रत्येकं पदमन्योन्यसापेक्षं पृथग्वाक्यमिति भावः। देवदत्त गामभ्याज शुक्लामित्यत्रैकैकं पदं वाक्यम्।

महाभाष्ये तु प्राचीनानां मतमादाय वाक्यलक्षणं प्रोक्तम्- 'आख्यातं साव्ययकारक-विशेषणं वाक्यम्' इति। अर्थात् अव्ययकारकविशेषणैर्युक्ता क्रिया वाक्यम्। अथवा अव्ययेन विशेषणेन कारकेन च युताक्रिया। कारकविशेषणेन सह आख्यातं तिङन्तं वाक्यं भवति यथा मृदु पचति स्थाल्यां तण्डुलम् इत्यत्र तण्डुलमिति कारकं पचतीति क्रिया। अव्ययविशेषणेन सह उदाहरणं यथा उच्चौः पठति नीचौः पठतीति वाक्ये उच्चौरिति अव्ययम्, पठतीति क्रिया। नागेशभट्टास्तु भिन्नं मतं प्रदर्शयन्ति अत्र, तेषां मते इदं लौकिकमेव वाक्यलक्षणमिति। आख्यातपदेन अत्र क्रियाप्रधानो लक्ष्यते, तेन त्वया शयितव्यम् इत्यत्र तिङन्तस्य वाक्यत्वव्यवहारवत् तिङतिङ् (पा.सू- 8.1.28) इति सूत्रे तिङ्ग्रहणात् सूत्रकारस्य पचति भवतीत्येतत्साधारणं लौकिकमेवाभिप्रेतम् इति तस्य मतम्।

नवीनानां मतमादय महाभाष्ये प्रोक्तम्- 'एकतिङ् वाक्यमि'ति। वाक्ये मुख्यं तिङन्तं पदमेकमेव स्यात्। एकतिङन्तार्थमुख्यविशेष्यकबोधजनकपदसमूहः इति पूर्वमतस्य तात्पर्यम्। तेन पचति भवति, पश्य मृगो धावति, ब्रूहि ब्रूहि देवदत्त इत्यादौ क्रियापदस्यानेकत्वेऽपि नैकवाक्यत्वहानिः। एकसंख्या समानवचनः इति अत्र मन्तव्यमिति कैयटः अन्यथा ब्रूहि ब्रूहि देवदत्त इत्यादौ वाक्यत्वादभावात् आमन्त्रितनिघातः न सिद्ध्येत्। एतत्सर्वं शास्त्रीयं पारिभाषिकं वाक्यलक्षणम्। तेन एकतिङन्तं वाक्यं भवति तस्मात् पचति भवति, पश्य मृगो धावति इत्यादीनामपि वाक्यत्वं जायते। वाक्यपदेन

वार्तिकमपि लक्ष्यते। अयं भ्रमः मीमांसकेषु वैयाकरणेषु च समानतो दृश्यते यत् जैमिनिलक्षणं प्राचीनमीमांसकाः लौकिकं वदन्ति, नव्याः कौमारिलास्तु शास्त्रीयं निगदन्ति। एवं व्याकरणेऽपि भर्तृहरिप्रभृतयः वार्तिककारोक्तं लक्षणं शास्त्रीयं वदन्ति, नव्याः नागेशभट्टाः लौकिकं वदन्ति। भोजकैयटप्रभृतयः वाक्यस्य वार्तिककारोक्तं पारिभाषिकमेव वाक्यलक्षणं स्वीचक्रुः तस्मात् कात्यायनकृतं वाक्यलक्षणमेव अपूर्वमिति तद् स्वीकार्यम्, नागेशोक्तं च नात्र सङ्गच्छते। तस्मादेव वाक्यकारं वररुचिमिति प्रसिद्धिः।

वचेर्ण्यति चजोः कु घिण्यतोः इति कुत्वे प्रक्रियायां च वाक्यमिति। व्याडिविरचितं वाक्यलक्षणं लौकिकमिति तु सर्वैः स्वीकृतम्। तल्लक्षणं च पदसङ्घातजं वाक्यमिति। न्यासकारः हरदत्तऽपि प्राह 'एकार्थः पदसमूहो वाक्यमि'ति। वाक्यलक्षणविषये यद्यपि भर्तृहरिणा साक्षात्किमपि लक्षणं नोक्तं तथापि निरवयवशब्दरूपं वाक्यमिति तस्याभिप्रायः इति पुण्यराजः वाक्यपदीयटीकायां अभिप्रैति। 'सुप्तिङ्चयो वाक्यं क्रिया वा कारकान्विता' इति अमरसिहंः, एवं लक्षणद्वयं प्रथमं शब्दात्मकं सुप्तिङ्चयो वाक्यम्, द्वितीयमर्थात्मकं क्रिया वा कारकान्विता वाक्यं भवति। "स्वार्थबोधसमाप्तेः पदसमुदाये वैयाकरणाः वाक्यत्वमिच्छन्ति" इति वाचस्पत्ये प्रोक्तम्। 'परस्पराभिसम्बद्धः पदसमुहो वाक्यमि'ति वृद्धा इति शब्दकल्पद्रुमे प्रोक्तम्।

### 2.2 मीमांसकमतम्

मीमांसकाः श्रोत्रग्राह्याः वर्णा एव शब्दाः इति वदन्ति। तेषामेव वाचकत्वमर्थात् अर्थप्रत्यायकत्वम्। ते च शब्दाः कण्टताल्वाद्यभिघाततजन्याः नित्या विभवश्च। ते च वर्णा एव समुदिताः पदवाक्यव्यपदेशभाजः भवन्ति। जैमिनिः मीमांसकसूत्रे वाक्यलक्षणं प्रोक्तवान् 'अर्थैकत्वाद् एकं वाक्यं साकांक्षं चेद् विभागे स्यात् ' (मीमांसासूत्रम्-2.1. 46)। अर्थात् यः च एतावान् पदसमूहो यस्य नियतः कश्चित् एवार्थो भवेत् विश्लेषे च यस्य पदं साकांक्षं भवेत् तद्वाक्यम् इति। इदमपि जैमिन्युक्तं लौकिकं वाक्यलक्षणम्।

### 2.3 नैयायिकमतम्

वर्णा एव समुदिताः पदवाक्यभावमापन्नाः अर्थप्रत्यायकाः भवन्ति इति नैयायिकाः। पदसमूहप्रतिसन्धानाच्च वाक्यं व्यवस्यति। "संबद्धांश्च पदार्थान् गृहीत्वा वाक्यार्थं प्रतिपद्यते" इति न्यायभाष्ये प्रोक्तम्। न्यायलीलावत्यामपि "किं तर्हि प्रातिपदिकं क्रमवद्वर्णसंहतिरिति ब्रूमः"। न्यायमञ्जर्यामपि "वर्णसमूहो पदम्, पदसमूहो वाक्यम्" इत्युक्तम्। 'मिथः साकांक्षशब्दस्य व्यूहो वाक्यमि'ति जगदीशः। 'पदसमूहो वाक्यमर्थसमाप्तौ' इति न्यायभाष्यकारः। 'वाक्यं पदसमूहो' इति तर्कसंग्रहे। 'वाक्यं त्वाकाङ्क्षायोग्यतासन्निधमतां

पदानां समूह:' इति तर्कभाषायाम्। तार्किका: सुबन्तसमूह: तिङन्तसमूह: सुप्तिङन्तसमूह: इति विभागं कुर्वन्ति।

## 2.4 आलंकारिकमतम्

आलंकारिकैरपि वाक्यलक्षणं व्यधायि। आलंकारिकेषु विश्वनाथस्य वाक्यलक्षणं च अतिप्रसिद्धम् लोके। तच्च 'वाक्यं स्यात् योग्यताकाङ्क्षासत्तियुक्त: पदोच्चय:'। भोजेन अपि वाक्यलक्षणविचारे बहुधा प्रयतितम्। "वयं त्वेकार्थपर: पदसमूहो वाक्यमित्येव प्रतिजानीमहे। तत्र पदैरपि वाक्यमारभते वाक्यैरपि च प्रकरणमारभत" इति तेन अभिहितम्। 'विभक्त्यन्तं पदं वाक्यमि'ति चन्द्रालोके।

एवं लौकिकवाक्यलक्षणे प्राय: सर्वत्र पदसमूहस्यैव वाक्यत्वं स्वीकृतम्। आकाङ्क्षायोग्यतासत्तितात्पर्याणि च वाक्यार्थबोधे सहकारिकारणानि।

एतानि स्थलानि विहाय अन्यत्रापि भारतीयशास्त्रेषु वाक्यविमर्श: विचारित: विद्यते परं प्रबन्धविस्तरभयात् तत्सर्वं न विचार्यते।

## 2.5 पाश्चात्यमतम्

इदानीन्तने भाषाविषयकसन्दर्भे कस्यचिद्विचारस्यैव पूर्णोच्चारणं वाक्यमित्युच्यते इति पाश्चात्यपरम्परा। केचन विचारा: अत्र दिङ्मात्रं सङ्कलिता: तद्यथा–

"A Sentence is a word or a set of words revealing an intelligible purpose. And a Sentence is an utterance which makes just as long as communication as the speaker has intended to make before giving himself a rest."

"Sentence is that after which silence seems best."

"A Sentence is a complete and independence human utterance, the completenss and independence shown by its standing along of being uttered itself."

पाश्चात्यविद्वान् रसेल् तु आख्यातपदघटितस्यैव पदसमूहस्य वाक्यत्वं कथयति। चैत्रो ममार इत्येव वाक्यं सम्भवति नतु चैत्रस्य मृत्युरिति वाक्यं सम्भवतीति तस्य मतम्। येन किञ्चिदुद्दिश्य किञ्चिद्विधीयते तदेव वाक्यमिति तस्य वाक्यलक्षणाभिप्राय:। सर्वं वाक्यं क्रियया परिसमाप्यते इति शाब्दिकमतस्यैव चर्वणमनेन कृतमिति नैतत् नूतनं तत्त्वम्।

### 3. विमर्शः

पदसमूहो वाक्यमिति वाक्यलक्षणं प्रायः सर्वैः भारतीयविद्वद्भिः पाश्चात्यपण्डितैश्च स्वीकृतम्। 'वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः' इति साहित्यदर्पणोक्ते वाक्यलक्षणे एव धृतादराः भूयांसो विद्वांसः। वैयाकरणनिकाये वाक्यलक्षणविषये बहूनि मतानि विद्यन्ते। तेषां मतं तु भाषाविज्ञानानुसारि निदुर्ष्टञ्च। परं शास्त्रीयक्षेत्रे वैयाकरणोक्तं वाक्यलक्षणं बहुधा विचारितम्। शास्त्रातिरिक्तक्षेत्रे अपि इदं वक्तुं न शक्यं यत् भारतीयशास्त्रं केवलं शास्त्रीयलक्षणनिरूपणे एव प्रवृत्तमिति, कारणं शास्त्रातिरिक्तं लौकिकमपि लक्षणं प्राच्यपरम्परायां निगदितम्। वैयाकरणनिकाये मीमांसकसम्प्रदाये यद्यपि किं शास्त्रीयं लक्षणं किं वा लौकिकमिति विषये वैमत्यं विद्यते तथापि एकस्य शास्त्रीयत्वस्वीकारेऽपरस्य लौकिकत्वं तु स्वतःसिद्धम्। वस्तुतस्तु साकाङ्क्षपदसमूहो वाक्यमिति लौकिकं वाक्यलक्षणं स्वीक्रियते।

### 4. उपसंहारः

अद्यत्वे भाषाविज्ञानमिति सर्वत्र जगति शब्दायमानं यत् तत्त्वं तत्तु भारते आवैदिककालात् प्रचलदस्ति। भारतीयपरम्परायां भाषायाः वैज्ञानिकमध्ययनं दार्शनिकमध्ययनं च आ बहोः कालात् प्रवर्तते। पाश्चात्यविद्वत्समाजे तु अष्टादशशताब्दितोऽस्य आरम्भो जातः। भारतीयशास्त्रीयपरम्परायां वेद–प्रातिशाख्य–शिक्षा–निरुक्त–व्याकरणग्रन्थेषु भाषाविषयको गहनो विचारो दृश्यते। भाषामादाय वेदे सूक्तयो अपि विद्यन्ते। वाक्यविज्ञानात्मिका पाणिनेरष्टाध्यायी अपूर्वा कल्पना वाक्यसंरचनायाम्। पाणिनेरपि वाक्यादेव शाब्दबोधः इति पक्षे एव धीः। किञ्च भारतीयशास्त्रीयपरम्परायां प्रायः सर्वत्र दर्शनेषु अन्यत्रापि च सूत्रसिद्धान्तः अत्यन्तं व्यापृतोऽस्ति। सूत्रसंगठनपद्धत्या अपि वाक्यस्य माहात्म्यं सुदृढं जायते। पाणिनेरष्टाध्याय्यां प्रायः सर्वत्रैव वाक्यविज्ञानविषये आदरो दृश्यते। विशिष्य कारकसमासादिषु एकैकस्यापि वाक्यस्य तथा शुद्धत्वाशुद्धत्वादिविचारः दृश्यते यच्च प्रायः पाश्चात्यपरम्परायां नास्त्येव। अद्यत्वे तु प्राच्याः अपि पण्डिताः पाश्चात्यमतेषु एव धृतादराः भवन्ति परं भाषाविज्ञानमिति विषयस्तु वस्तुतः भारतीयाशास्त्रसंलिप्तः। पाश्चात्यैः प्रायः भारतीयमतमादाय व्याख्यापद्धतिः निर्णीयते क्वचित् तद्विरुद्धमेव च। एवञ्च भाषाविज्ञानिकी भारतीयपरम्परा अत्यन्तं समादृता परिपूर्णा समृद्धा च इति तु निर्विवादसिद्धम्।

**सहायकग्रन्थाः**

1. अन्नम्भट्टः। तर्कसंग्रहः (प्राचीननवटीकोपेतः)। श्रीसत्कारी शर्मा। वाराणसी : चौखम्बा संस्कृत संस्थानम्।
2. द्विवेदी कपिलदेवः। (2010) भाषाविज्ञान एवं भाषाशास्त्र। वाराणसी : विश्वविद्यालय प्रकाशन।
3. जगदीशः। (2007) शब्दशक्तिप्रकाशिका। वाराणसी : चौखम्बा प्रकाशन।
4. जयन्तभट्टः। (2008)। न्यायमञ्जरी (पञ्चममाह्निकम्)। प्रवाल कुमार सेन (प्रकाशकः)। कलिकाता : संस्कृत बुक डिपो।
5. पतञ्जलिः। (2006)। महाभाष्यम्। गुरुप्रसाद शास्त्री (सम्पादकः)। नवदेहली : राष्ट्रियसंस्कृतसंस्थानम्।
6. भर्तृहरिः। (2015)। वाक्यपदीयम् (पुण्यराजकृतप्रकाशसंवलितं हरिवृषभकृतवृत्ति-संवलितं नारायणहिन्दीसमेतम्)। हरिनारायणः तिवारी (सम्पादकः)। वाराणसी : चौखम्बा।
7. भोजराजः। (1956)। शृङ्गारप्रकाशः। जोशार जि.आर. (सम्पादकः)। मैसूर : कोरोनेशन मुद्रणालयः।
8. वल्लभाचार्यः। (1991)। न्यायलीलावती। शास्त्री हरिहरः (सम्पादकः)। वाराणसी : चौखम्बा सीरीज आफिस।
9. विश्वनाथः। (2011)। साहित्यदर्पणः (लक्ष्मटीकोपेतः)। कृष्णमोहन शास्त्री (सम्पादकः)। चौखम्बा संस्कृत संस्थान : वाराणसी।
10. Winternitz, (1927). A History Of Indian Literature, University of Calcutta.



शिक्षामृतम्, वर्ष-2022, अंक-13 ISSN : 2349-6452

# संस्कृतभाषाधिगमपरिप्रेक्ष्ये अभिप्रेरणाकारकाणि तन्महत्त्वञ्च

-दीपान्वितादासः *

**उपोद्घातः-**

विपुलवाङ्मयविस्तारे भाषानिर्माणसौन्दर्ये अतिसूक्ष्मभावानां स्पष्टीकरणेच संस्कृतं विना न काप्यन्या भाषा समर्था भवितुमर्हति। भारतस्य विभिन्नेषु प्रदेशेषु विभिन्नाः भाषा व्यवह्रियन्ते। तथापि आसेतुहिमाचलं संस्कृतसाहित्यं पठनपाठनयोर्वरीवृत्यते। ये कार्यान्तरव्यापृताः संस्कृतं पठितुम् असमर्थाः तेऽपि स्वमातृभाषया अनुदितान् संस्कृतग्रन्थान् पठन्ति। विश्वभाषासु प्राचीनभाषा भवति संस्कृतभाषा। प्राचीनकाले संस्कृतभाषायाः अध्ययनाध्यापने पारम्परिकपद्धत्या एव प्रचलतः। अधुना यान्त्रिककालेऽस्मिन् धर्मार्थ-काममोक्षेसु अर्थदृष्ट्या कामदृष्ट्या च समाजस्य परिवर्तनं जायते। तेन कारणेन समाजे भाषयाः व्यवहारः कार्यं वा गौणं परिलक्ष्यते। अद्यत्वे तु स्थितिः नितरांचिन्ताजनकः अस्ति। वर्तमानकाले अतिमूल्ययुक्तयाः संस्कृतभाषायाः परिपोषणे परिरक्षणे संस्कृत-भाषाभाण्डारस्य अभिवर्धनेच अभिप्रेरणायाःमहत्त्वपूर्णं स्थानं वर्तते। भारतीयसंस्कृतेः ज्ञानार्थं संरक्षणार्थं प्रचारार्थं संस्कृतभाषा अनिवार्यरूपेण पठनीया। तदर्थमभिप्रेरणमेकं मुख्यतमं साधनम्। अभिप्रेरणं किमपि साधयितुं मनुष्यम् उत्तेजयति। तादृशमभिप्रेरणं, तस्य कारकाणि संस्कृतभाषाधिगमे उपयोगीनि भवन्ति। अधुना शोधपत्रेऽस्मिन् प्रमुखाणि अभिप्रेरणाकारणि तेषां महत्त्वं च क्रमशः प्रस्तूयन्ते।

**प्रसिद्धानि अभिप्रेरणाकारकाणि**

1. कक्ष्या पाठ्यचर्यासंरचना च (Class and Curriculum Structure)
2. अध्यापकस्य व्यवहारः व्यक्तित्वञ्च (Teacher Behavior and Personality)
3. शिक्षणविधयः (Teaching Methods)

---

* शोध अध्येता (शिक्षा), केन्द्रीयसंस्कृतविश्वविद्यालयः, तिरुपतिः।

4. अभिभावकानाम् अभ्यासः संलग्नताच (Parental Habits and Involvement)
5. पारिवारिकास्थिरता (Family Issues and Instability)
6. सहच्छात्रसम्बन्धः (Peer Relationships)
7. शिक्षणवातावरणम् (Learning Environment)
8. मूल्याङ्कनम् (Assessment)

### परिवारसम्बद्धानि अभिप्रेरणाकारकाणि

छात्राणाम् अभिप्रेरणा प्रथमं गृहादेव भवति। मातैव छात्राणां प्रथमगुरुः भवति। मातापित्रोः संस्कृताध्यायनविषयाभिरुचिरेव संस्कृतभाषां प्रति अभिप्रेरणाकारकं भवति। परिवारे संस्कृतज्ञाः/संस्कृतशिक्षकाः भवन्ति चेदपि सहजप्रवृत्त्या संस्कृतभाषाधिगमे जिज्ञासा जायते। स्वीयसहोदराः संस्कृतं अधीयते चेत् तत्प्रभावोऽपि संस्कृतभाषाधिगमे प्रेरको भवति। क्वचित् पितृभ्यां सह सहोदराणां संस्कृतेन वार्तालापं श्रुत्वा संस्कृतं प्रति उत्साहः वर्धते। केषुचित् सन्दर्भेषु परिवारजनाः परम्परारूपेण संस्कृताध्ययनं कुर्वन्ति चेत् संस्कृतभाषाधिगमे प्रेरकं भवति। गृहे रामायणमहाभारतभागवतकथादीनां विषये चर्चा नित्यानुष्ठानक्रियाकलापेन संस्कृतभाषां प्रति जिज्ञासा समुत्पद्यते। तथैव परिवारजनाः संस्कृतभाषां प्रति अभिप्रेरयन्ति।

### सामाजिकाभिप्रेरणाकारकाणि

समाजे संस्कृतज्ञानां गौरवम् अधिकं वर्तते इति भावनया संस्कृतं पठ्यते। विद्वत्सभासु संस्कृतज्ञानां विशिष्टस्थानमपि संस्कृताध्ययनार्थं मुख्याभिप्रेरणकारकं भवति। समाजे संस्कृतभाषायाः अधिकं महत्त्वमस्तीत्यतः संस्कृतभाषाध्ययनं छात्राः कुर्वन्ति। समाजे आधुनिकविचारनियमानां जागरणाय संस्कृतं पठ्यते। संस्कृतकार्यकलापानाम् आयोजनेन आत्मसम्मानं वर्धते। पुनः संस्कृतपठनान्तरं समाजे कीर्त्यादिकं प्राप्यते इति तदर्थं नैके संस्कृतभाषाधिगमे समाजादपि अभिप्रेरिता भवन्ति।

### शैक्षिकाभिप्रेरणाकारकाणि

शैक्षिकाभिप्रेरणाकारकेषु प्रधानं भवति अध्यापकानां पाठनप्रभावः एव। संस्कृतं मधुरा भाषा, तान्माधुर्यं ज्ञातुं संस्कृतं पठ्यते। विद्यालयीयपाठ्यपुस्तकेषु संस्कृतविषयाः संस्कृतं प्रति समाकर्षिताः भवन्ति। शिक्षकः नूतनविषयस्य पूर्वानुभवेन सह संबन्धं कल्पयति चेत् अधिगमः सरलः रोचकश्च भवति। अनेन छात्राः अभिप्रेरणं प्राप्य

शिक्षणाधिगमकार्येषु प्रोत्साहं भाग गृह्णन्ति। उचितविषयाणां चयनेन छात्रस्य पठने रुचिः उत्पन्ना भवति। छात्राणां परीक्षायाः परिणामः सन्तोषं जनयति चेत् ते अग्रिमाध्यनाय प्रेरणां प्राप्नोति। एतेन छात्राः स्वप्रगतेः मूल्याङ्कनं स्वयं कर्तुमर्हन्ति। अध्यापकः छात्राणां प्रगतिं ज्ञात्वा अग्रिमलक्ष्यस्य निश्चयं कर्तुं शक्नुवन्ति। प्रत्येकं छात्रः स्वक्षमतारुचिकारणेन विशिष्टकार्यस्य कृते योग्यो भवति। जीवनस्य लक्ष्यं स्पष्टं भवति, सः तस्यां दिशायाम् अग्रे वर्धयितुं प्रयासं करोति। दूरदर्शनादिषु संस्कृतविषयसम्बद्धाः शैक्षिककार्यक्रमाः संस्कृतभाषाधिगमे प्रेरकाः भवन्ति।

### आर्थिकाभिप्रेरणाकारकाणि

संस्कृताध्ययनानन्तरं धनम् अर्जयितुं शक्यते इति भावना आर्थिकाभिप्रेरणाकारकं भवति। किञ्च संस्कृताध्यनेन दूरदर्शनादिषु वार्ताः, सामाजिकप्रवचनमपि कर्तुं शक्यते। संस्कृतपठने अल्पव्ययः अतः संस्कृतपठनाय छात्राः उत्सुकाः भवन्ति। केचन धनार्जनार्थं संस्कृताध्ययनम् अत्यन्तं प्रभावपूर्णं वर्तते इति मन्यते। संस्कृतपठनेन छात्रवृत्तिः अधिका लभ्यते इति कारणात् संस्कृताध्ययनं क्रियते। संस्कृतपठनेन स्वल्पसमये उद्योगप्राप्यते ततः गृहस्यार्थिकस्थितिः वर्धते तदर्थं संस्कृतभाषापठितुम् इष्यते।

### मनोवैज्ञानिकाभिप्रेरणाकारकाणि

संस्कृतभाषाध्ययनेन व्यक्तित्वविकासः सम्भवतीति चिन्तनमपि प्रमुखं मनोवैज्ञानिक अभिप्रेरणाकारकं भवति। केचन जेष्ठानां दूषणस्य क्षतिपूर्त्यर्थं संस्कृतमधिजिगमिषन्ति। केचन विशेषं कारणं विना किमपि विषमधीयते। ईदृशी स्वयं जिज्ञासा अपि अभिप्रेरणाकारकविशेष एव। छात्रस्य प्रमुखमौलिकावश्यकता क्रियाकलापेषु भागग्रहणं वर्तते। क्रियाप्रधानविद्यालयाः बालकेभ्यः रोचन्ते। तत्र नीरसतायाः अनुभवः न भवति। येः क्रियाकलापैः सह तस्य सक्रियसम्बन्धो भवति, ताः क्रियाः अभिरुचिं वर्धयन्ति। एवं विद्यालयस्य क्रियाकलापेषु सक्रियभागग्रहणस्य अवसरप्रदानेन छात्रेभ्यः अधिककार्य-करणार्थं शिक्षणार्थं च अभिप्रेरयितुं शक्यते। केचन मनोवैज्ञानिकाभिप्रेरणाकारकाणि यथा–

1. प्रोत्साहनम् (Encouragement)
2. जागरूकता (Arousal)
3. आकाङ्क्षाः (Expectancy)
4. दण्डः (Punishment)

5. आवश्यकता: (Needs)

6. संवेगात्मकस्थिति: (Emotional Status)

7. प्रतियोगिता: (Competitions)

8. आत्मविश्वास: (Self Confidence)

9. अभिरुचि: (Interest)

**वैयक्तिकाभिप्रेरणाकारकाणि**

छात्राणां स्वीयोच्छाशक्तिमाश्रित्य अभिप्रेरणा भवति। यदि बालक: कमपि नूतनविषयं ज्ञातुं मानसिकरीत्या सिद्ध: वर्तते अथवा तस्य इच्छाशक्ति: वर्तते तदा प्रतिकूलपरिस्थितिषु अपि स: तं विषयमधिगच्छति। संस्कृताध्ययनं कुर्वन्ति। संस्कृतभाषा भारतीयसांस्कृतिकी भाषा, संस्कृते: ज्ञानार्थं, संरक्षणार्थं, प्रचारार्थं च केचन संस्कृताध्ययनार्थं प्रेरितास्स्यु:।

**उपसंहार:**

कस्यापि विषयस्य अधिगमे अभिप्रेरणम् अत्यन्तं प्रमुखं भवति। तत्रापि संस्कृतभाषाधिगमे अस्य महत्त्वमत्यधिकं भवति। अभिप्रेरणप्रक्रियया छात्रेषु संस्कृतभाषां प्रति रुच्युत्पादनं भवति। अभिप्रेरणेन बालकेषु नैतिक: चारित्रिक: च विकास: सम्भवति। छात्रस्य समक्षे संस्कृतभाषाधिगमस्य लक्ष्यं स्पष्टं भवेत्। निर्देशनाधारेण व्यावसायिकलक्ष्यमपि स्पष्टयेत्। लक्ष्यस्पष्टतया बालक: तस्यां दिशायाम् अग्रे वर्धनस्य प्रयासं करोति। तस्यां दिशायां सफलतामपि लभते। तथा च संस्कृतभाषाधिगमे वास्तविकावश्यकताया: अनुभूतिर्भवति। उत्तमग्रन्थालय:, प्रयोगशाला:, संस्कृतमयवातावरणं छात्रेषु संस्कृतभाषाधिगमे रुचिम् उत्पादयन्ति। भाषासाहित्यव्याकरणाद्यंशेषु ज्ञानार्जनाय संस्कृतं अभिप्रेरकं भवति। आत्मानुशासनसंस्थापनार्थं, कल्पनाशक्ते: सर्जनात्मकशक्तेश्च संवर्धनार्थं संस्कृतभाषाधिगम: अभिप्रेरिका भवति। परिवारे संस्कृताज्ञा: भवन्ति चेदपि सहजप्रवृत्या संस्कृतभाषाधिगमे जिगांसा जन्यते। केषुचित सन्दर्भेषु परिवारजना: परमपरारुपेण संस्कृताध्यायनं करोति चेत् संस्कृतभाषाधिगमे प्रेरकं भवति। केचन छात्रा: रुचिपूर्वकं संस्कृतं पठन्ति, केचन छात्रा: संस्कृतं विषयं प्रति रुचिं न प्रदर्शयन्ति। तेषां संस्कृतभाषां प्रति रुचिं वर्धयितुं, प्रेत्साहितुम् अभिप्रेरणाकारकाणि महत्त्वपूर्णानिसन्ति।

**परिशीलितग्रन्थसूची–**


- शिक्षा मनोविज्ञान– एस. पी. कुलश्रेष्ठ–मेरठ– 2006।
- शिक्षण अधिगम प्रक्रिया का विकास– सुरेश भटनागर–मेरठ–2008।
- अधिगम एवं विकास के मनोवैज्ञानिक आधार– डॉ. आर.ए. शर्मा–मेरठ–2009।
- भारतीय मनोविज्ञान– डॉ. श्रीमती लक्ष्मी शुक्ला– दिल्ली– 2009।
- शिक्षण अधिगम का मनोविज्ञान– प्रो. सुदेश भटनागर & सुरेश जोशी–मेरठ– 2010।


